

## WITH REGRET

A major breakdown in the printing machine disrupted the process of printing and production of the entire chain of magazines of the Chandamama group of publications. We are, therefore, obliged to **combine the February and March** issues of our periodicals. We regret the inconvenience caused to our readers, distributors, and advertisers.

**-PUBLISHER**

Statement about ownership of CHANDAMAMA (Sanskrit)
Rule 8 (Form VI), Newspapers (Central) Rules, 1956

| | |
|---|---|
| 1. *Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai, Vadapalani, Chennai - 600 026 |
| 2. *Periodicity of Publication* | MONTHLY<br>Ist of each calendar month |
| 3. *Printer's Name* | B.V.REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai, Vadapalani, Chennai - 600 026 |
| 4. *Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai, Vadapalani, Chennai - 600 026 |
| 5. *Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai, Vadapalani, Chennai - 600 026 |
| 6. *Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY 2. SRI B.V. NARESH REDDY<br>3. SRI B.V. SANJAY REDDY 4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI 6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA 8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Chennai - 600 026 |

I, B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

B. VISWANATHA REDDI
*Signature of the Publisher*

2nd March 1998

# किञ्चित् पीनसः जातः अस्ति

| | |
|---|---|
| गीता - हरिः ओम् ! सीते ! भवती कुशलिनी वा ? | Hari ohm Sitha - How are you ? |
| सीता - आं, कुशलिनी । | Yes, fine. |
| गी - परन्तु भवत्याः ध्वनिः भिन्नः इव श्रूयते खलु ? | But your voice seems to be different. Anything wrong ? |
| सी - तथा वा ? ह्यः अहं वृष्ट्या आर्द्रा अभवम् । अतः तेन किञ्चित् पीनसः जातः अस्ति । | I see ! may be due to cold. I got wet yesterday due to rain. |
| गी - तस्य निवारणार्थं भवती किमपि औषधं स्वीकृतवती वा ? | Have you taken any medicine for that ? |
| सी - गृहे एव विद्यमानाः गुलिकाः स्वीकृतवती । किन्तु न्यूनं न अभवत् । | I have taken some tablets in available in the house - but no effect. |
| गी - वैद्यस्य मार्गदर्शनेन विना अस्माभिः एव स्वयं गुलिकाः न स्वीकरणीयाः । भवतु, केवलं पीनसः, उत अन्यत् किमपि अस्ति ? | We should not take tablets without the Doctor's prescription. Is it only cold or anything else ? |
| सी - पीनसेन सह कासः अपि अस्ति । ज्वरः अपि किञ्चित् अस्ति इति भासते । किन्तु निश्शक्तिः किञ्चित् अधिका अस्ति । गृहकार्यं सर्वं कथं करोमि इति चिन्ता मम । | I have cough and cold, also some fever. I am weak and I am worried how I will finish domestic work. |
| गी - तर्हि निश्चयेन अद्य एव गत्वा वैद्यं पश्यतु । उपेक्षां न करोतु भवती । | Please go to a doctor today itself. Don't neglect. |
| सी - अस्तु, धन्यवादः । स्थापयामि । | O.K. Thank You. |
| गी - अस्तु, राम् राम् । | Ram Ram. |



# चन्दमामा



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'






## वनवासिनः वीरगाथा

स्वातन्त्र्यसङ्ग्रामकाले अस्मत्पूर्वजैः यानि अपूर्वाणि शौर्यकार्यादीनि कृतानि तानि स्मारयति स्वर्णजयन्तीमहोत्सवः । सन्तालविद्रोहविषयं वयं सर्वे पठितवन्तः स्याम एव । सन्तालकुलीयाः वनजनाः ईस्ट्-इण्डिया-संस्थां विरुद्ध्य सोत्साहं युद्धं कृतवन्तः । तस्याः वीरगाथायाः अङ्गभूतस्य कस्यचित् वीरस्य व्यवहारविवरणम् एवम् अस्ति -

एकदा ब्रिटिश्सैन्यं कस्याश्चित् गिरिजनवसतेः समीपम् आगतम् । तदा तान् स्वागतीकृतवती - बाणवर्षणधारा ! ते सर्वे बाणाः एकस्मात् गृहात् आगच्छन्तः आसन् । अतः सैनिकाः तत् गृहं परितः स्थित्वा भित्तिषु रन्ध्राणि कृत्वा गोलकवृष्टिं कृतवन्तः । तेषां नायकः गृहजनान् उद्दिश्य आज्ञापितवान् - 'अविलम्बेन शरणं गच्छन्तु' इति । किन्तु उत्तररूपेण पुनरपि बाणवृष्टिः आरब्धा । बहुकालं यावत् एषा एव प्रक्रिया अनुवृत्ता । किन्तु बाणानां सङ्ख्यायां ह्रासः दृश्यते स्म क्षणे क्षणे । अन्ते एकः एव बाणः बहिः आगतः । आंग्लसैनिकाः गोलकास्त्रप्रयोगं पुनः कृतवन्तः ।

अनन्तरकाले गृहतः एकः अपि बाणः न निर्गतः । आंग्लसैनिकाः द्वारं भञ्जयित्वा अन्तः गतवन्तः । अन्तः कश्चन वृद्धः शवानां मध्ये स्थितः आसीत् । अन्तिमबाणः तस्यैव वृद्धस्य धनुषः निर्गतः आसीत् । 'शरणं गच्छतु रे' इति आज्ञापयन् आंग्लसेनानायकः अग्रे गतवान् । वृद्धस्य दक्षिणहस्तः तु शताधिकगोलकास्त्रघट्टनतः नितरां व्रणितः, गोलकोपेतः, रक्तसिक्तः च आसीत् । तथापि वृद्धेन प्रयुक्तः खड्गः क्षणमात्रेण सेनानायकस्य शिरः कर्तयित्वा भूमौ अपातयत् । यतः वृद्धस्य दक्षिणहस्तः शक्तिहीनः जातः आसीत् चेदपि तदीयः वामहस्तः तु कार्यकरणक्षमः आसीत् एव !

ततः दशाधिकाः भुशुण्ड्यः अस्त्रवर्षणम् अकुर्वन् । पूर्वं पतितानां शवानाम् उपरि वृद्धस्य निर्जीवशरीरम् अपि अपतत् । एवं सन्तालकुलीयानां विरोधः अन्त्यं प्राप्नोत् । एतां घटनां स्मरता केनचित् आंग्लसैनिकेन लिखितम् अस्ति - 'अस्माकं सैन्ये तादृशः कोऽपि न आसीत्, यश्च सरलानां, वीराणां सन्तालजनानां शौर्यं दृष्ट्वा अपि लज्जां न प्राप्तवान् स्यात्' इति ।

सम्पुटः - १४ फेब्रवरी - १९९८ सञ्चिका - ११

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गारः - charcoal
अञ्चलम् - saree border
अद्यपर्यन्तम् - till today
अभिप्रैति - presumes
अभेद्यम् - impenetrable
अवगच्छति - understands
आवृत्य - having surrounded
उद्धर्तुम् - to lift
उपायनम् - presentation
ऊढ्वा - having married
करताडनम् - clap
काचकम् - glass
कृत्रिमः - artificial
कृत्रिममुखम् - mask
क्षुण्णम् - abrasion
खद्योतः - fire fly
खनी - mine
चङ्क्रमणम् - crawling
तोषणम् - to make happy
धाष्टर्यम् - insolence
निक्षेपणम् - burrying
निम्बवृक्षः - neem tree
निरोद्धुम् - to prevent
निश्चेतुम् - to decide
पाञ्चालिका - doll
पुष्पाधानी - flower vaze
प्रग्रहः - reins
बन्धुम् - to bind
बलिष्ठः - strong, mighty
भञ्जनम् - to break
भूरिशः - plenty
मुद्गरः - a hammer
वक्षः - chest
वणिक् - merchant
वल्मीकः - ant hill
वितानः - pendal
विशदीकरोति - explain /expand
वृणोति - weds
श्रेयोभिलाषी - well-wisher
समावेशः - assembly

वार्ताविशेषः -

# अन्तरिक्षगामिनी प्रथमा भारतीयमहिला

कर्नाल्मध्ये विद्यमाने टागूर्बालनिकेतने विद्याभ्यासम् आरब्धवत्याः कल्पनाचाव्लायाः आबाल्यं विमानस्य चित्रलेखनम् अत्यन्तं प्रियम् आसीत् । प्रौढशालायाः शिक्षणस्य अनन्तरं तां वैद्यकीयस्य अध्ययनार्थं प्रेषयितुं प्रयत्नं कृतवन्तौ तस्याः मातापितरौ । किन्तु सा - 'यन्त्रविज्ञानमेव पठामि' इति सानुरोधं वदन्ती वायुयानशास्त्रं प्रधानविषयत्वेन स्वीकृत्य अध्ययनम् आरब्धवती । तदा तस्याः वयः १७ वर्षाणि । पश्चात् १८ वर्षाणाम् परिश्रमस्य सङ्कल्पदृढतायाः च फलरूपेण सा गतस्य नवम्बर्मासस्य नवदशे दिनाङ्के अन्यैः षड्भिः सह 'कोलम्बिया' - व्योमनौकया अन्तरिक्षे प्रयाणं कृतवती ।



न केवलम् अस्माकं देशे, अपि तु एष्याखण्डे एव अन्तरिक्षम् ऐदम्प्राथम्येन सा एव प्रविष्टवती इति कारणेन सर्वत्र प्रसिद्धा जाता अस्ति सा ।

'कार्नाल्'नामकं हरियाण-राज्यस्थं देहलीनगरस्य समीपे विद्यमानं किञ्चित् लघुनगरम् । तत्रैव कल्पनायाः जन्म अभवत् । सा न केवलं व्योमयानशास्त्रविभागस्य प्रथमा महिला विद्यार्थिनी, अपि तु शिक्षकाणाम् अपि प्रीतिपात्रम् आसीत् - स्वस्य विभागे अध्ययने अपि अग्रेसरी सती । स्नातकपदस्य प्राप्तेः अनन्तरं सा उन्नतशिक्षणार्थम् अमेरिकां प्रति गत्वा व्योमयानशास्त्रविषये एव संशोधनानि कृत्वा 'डाक्टरेट्'पदं प्राप्तवती । तत्र तया वृत्तिनिरतवैमानिकस्य पैरिह्यारिसन्वर्यस्य परिचयः प्राप्तः । पश्चात् सा तेन एव परिणीता अभवत् । अनन्तरं तस्य साहाय्येन एव सा स्वयमपि विमान-चालनानुमतिं प्राप्तवती । क्रि.श. १९८७ तमे वर्षे सा एकाकितया (अन्यसाहाय्यं विना ) एव विमानं चालितवती ।

ततः तस्याः दृष्टिः अन्तरिक्षपरिशोधनक्षेत्रे पतिता । सा न्याषनल्-एरोनाटिक्स् - स्पेस् - अड्मिनिष्ट्रेषन् - संस्थां (नासा) प्रविश्य अचिरादेव तत्र एकस्य विभागस्य अध्यक्षा अपि अभवत् । ''अन्तरिक्षगामिनां चयनं करिष्यते'' इति विज्ञापिकां दृष्ट्वा सा क्रि.श. १९९२ तमे वर्षे तस्य आवेदनपत्रं पूरयित्वा प्रेषितवती । १९९४ तमे वर्षे पुनश्च अन्यत् एकम् आवेदनपत्रं प्रेषितवती । उपस्थितेषु ३००० अभ्यर्थिषु १९ जनान् चितवन्तः व्यवस्थापकाः परीक्षां कृत्वा । तेषु कल्पना चाव्ला अपि अन्यतमा आसीत् । क्रि.श. १९९६ तमे वर्षे प्रवृत्तायां अन्तिमपरीक्षायाम् अपि चिता कल्पना ह्रूष्टन्-प्रशिक्षणकेन्द्रे १६ मासान् यावत् शिक्षणं प्राप्तवती । कोलम्बिया-८८ नामिकायाः व्योमनौकायाः अन्तरिक्षप्रेषणस्य सर्वाः सज्जताः अभवन् । त्रिभिः अमेरिकीयैः अन्तरिक्षगामिभिः जपान्देशस्य प्रथम-अन्तरिक्षगामिन्या महिलया टाकाय्दोय्वर्यया, अपरेण उक्रेनियादेशस्थेन अन्तरिक्षगामिना च सह सा नवम्बर्मासस्य १९ दिनाङ्के कोलम्बिया-८८ व्योमनौकया अन्तरिक्षं प्रति प्रस्थितवती ।

''अन्तरिक्षे याप्यमानेषु १५ दिनेषु अपि व्योमगामिभिः द्रवाहारः एव स्वीकरणीयः । प्रतिदिनं १६ घण्टाः यावत् परिशोधनं करणीयम् । सर्वदा निर्दिष्टानां विषयाणां सङ्ग्रहणकार्ये तैः निरतैः भवितव्यम् । दिने अष्टघण्टाः यावत् पर्याय-क्रमेण निद्रां कुर्युः'' इत्यादयः नियमाः पालनीयाः आसन् ।

तस्यां व्योमनौकायां प्रवृत्ते परिशोधने अन्तिमः निर्णयः कल्पनायाः एव आसीत् । सूर्यग्रहस्य अध्ययनार्थं प्री प्लैयिङ्ग् स्याटलैट् एकम् उड्डायितवती अस्ति सा । अपि च जपान्देशस्य टाकाय् दोर्य्वर्यया सह अन्तरिक्षे सञ्चारमपि कृतवती अस्ति ।

कल्पनायाः अन्तरिक्षयानम् अस्माकं देशस्य जनाः अत्यन्तम् आसक्त्या दृष्टवन्तः । अन्तरिक्षं प्रति गमनात् पूर्वं सा भारतस्य प्रतिनिधीन् उद्दिश्य - ''एषः भारतस्य अभिमानास्पदसमयः अस्ति'' इति उक्तवती अस्ति ।



# वेदवती

चन्दनपुरे रामनाथसीतानामकौ दम्पती आस्ताम् । चिरकालानन्तरं तयोः एका पुत्री जाता । तस्याः हासस्य कलरवः वेदपठनवत् आनन्ददायकः आसीत् इति कारणेन मातापितरौ 'वेदवती' इति तस्याः नाम कृतवन्तौ ।

कदाचित् शिशुः वेदवती मातुः स्तन्यं पिबन्ती शाटिकायाः अञ्चलं दृढतया मुष्ट्या गृहीतवती । सीता बहुधा प्रयत्नं कृत्वा अपि अञ्चलं तस्याः मुष्टितः मोचयितुं न शक्ता । अनन्तरं रामनाथः अपि प्रयत्नं कृत्वा विफलः अभवत् । किन्तु आश्चर्यं नाम, यदा शाटिका छिन्ना अभवत् तदा शिशुना शाटिका त्यक्ता । अमूल्या शाटिका छिन्ना इति कारणेन सीतायाः किञ्चित् खेदः अभवत् । किन्तु मासत्रयस्य शिशुं किं वा वक्तुं शक्नुयात् सा ? परं तां वार्तां श्रुतवन्तः जनाः 'तावान् लघुशिशुः तावत् दृढतया गृहीतवान् इति तु विशेषः एव' इति उक्तवन्तः ।

यदा त्रयः मासाः अतीताः तदा वेदवती चङ्क्रमणं कुर्वती अग्रे गत्वा तत्र विद्यमानं काष्ठफलकम् एकम् आकृष्टवती । तेन तस्य फलकस्य उपरि विद्यमाना पितामहकालस्य काचकमयी पुष्पाधानी पतिता, भग्ना च । विशिष्टकलया युक्ता पुष्पाधानी नष्टा इति कारणतः रामनाथस्य बहु दुःखम् अभवत् । शिशोः किमपि न अभवत् इति सीता समाधानं प्राप्तवती ।

एवं तस्याः एकवर्षपूर्तेः पूर्वमेव गृहस्य बहूनि वस्तूनि नष्टानि । "लघुबालाः गृहे भवन्ति चेत् एवमेव भवति" इति केचन उक्तवन्तः । अन्ये केचन - "वेदवत्यां काचित् दुष्टा शक्तिः प्रविष्टा अस्ति" इति उक्तवन्तः । अतः रामनाथः कस्यचित् हठयोगिनः समीपं गतवान् ।

सः हठयोगी पार्श्वग्रामे एव वसति स्म । सः अष्टसिद्धीः प्राप्तवान् अस्ति इति सर्वे वदन्ति स्म । तेन अज्ञातः मन्त्रः तन्त्रं वा नास्ति इत्यपि जनाः वदन्ति स्म । रामनाथः गत्वा यदा समस्यां निवेदितवान् तदा सन्तोषेण सः हठयोगी रामनाथेन सह आगतवान् ।

चन्दनपुरे रामनाथस्य गृहम् आगतः हठयोगी स्वस्य मन्त्रदण्डं कस्यचित् काष्ठफलकस्य उपरि संस्थाप्य विश्रान्तिं स्वीकुर्वन् आसीत् । तदा कुतश्चित् तत्र धावन्ती आगता वेदवती काष्ठफलके स्थापितं मन्त्रदण्डं स्वीकर्तुं यदा प्रयत्नं कृतवती तदा सः मन्त्रदण्डः अधः पतित्वा भग्नः अभवत् । तत् दृष्ट्वा हठयोगी स्ववक्षसं हस्तेन ताडयन् - ''मम मन्त्रदण्डम् एव भञ्जितवती भवती सामान्या न । इतःपरं भवत्याः नाम वेदवती इति न । भेदवती इति नाम एव भवत्याः युज्यते । अहं तु एकक्षणम् अपि अत्र न तिष्ठामि'' इति वदन् स्वस्य मन्त्रदण्डस्य खण्डान् सङ्गृह्य त्वरया ततः निर्गतवान् ।

तद्दिनादारभ्य सर्वे भेदवती इति नाम्ना एव वेदवत्याः निर्देशनम् आरब्धवन्तः । स्वस्य नाम्नः अनुगुणमेव व्यवहरन्ती सा प्राप्तवयस्का अभवत् ।

भेदवत्याः एतादृशानाम् विलक्षण-व्यवहाराणां दर्शनेन तस्याः मातापित्रोः मनसि भीतिः उत्पन्ना । सा फलम् उत्पाटयितुं गच्छति चेत् शाखा एव उत्पाटिता भवति स्म । पुष्पस्य चयनसमये सस्यमेव तस्याः हस्ते आगच्छति स्म । सा जलम् उद्धर्तुं कूपं गच्छति चेत् घटः एव कूपे पतति स्म । सा सम्मार्जनं करोति चेत् भूमौ गर्ताः एव भवन्ति स्म । तया प्रक्षालितानि पात्राणि विकृतानि भवन्ति स्म । तया





SAN - F-2



प्रक्षाल्य प्रसारिता शाटिका निश्चयेन छिन्ना भवति स्म एव । तया कृतात् कार्यात् सर्वदा या कापि हानिः भवति स्म एव इति कारणेन तां किमपि कार्यं वक्तुम् एव भयम् अनुभवतः स्म तस्याः मातापितरौ ।

यदि तया किञ्चित् गृहं गम्यते स्म तर्हि तद्गृहजनाः भयेन ताम् एव पश्यन्ति स्म । अतः सा सर्वदा स्वसखीभिः सह क्रीडितुं ग्रामात् बहिः गच्छति स्म । 'जन्मना वेदवती सती कार्येण भेदवती इति नाम प्राप्तवत्याः अस्मत्पुत्र्याः भविष्यजीवनं कथं भवेत्' इति चिन्तयन्तौ भयम् अनुभवतः स्म तस्याः पितरौ ।

तस्मिन् एव काले चन्दनपुरतः १० कि.मी.दूरे विद्यमाने कृत्तिकापुरे वन्दनः नाम कश्चित् आसीत् । सः स्वस्य विशिष्टतन्त्राणां द्वारा अकस्मात् केनचित् प्रकारेण प्रसिद्धः जातः आसीत् । तेषां तन्त्राणाम् उपयोगेन सः वज्राणि अपहरति स्म ।

सः कयाचित् विशिष्टया मृत्तिकया हस्तप्रमाणां पाञ्चालिकां निर्माय वज्रापणं गच्छति स्म । तत्र वज्रं चोरयित्वा पाञ्चालिकायाः अन्तः स्थापयति स्म । वज्रस्य अन्तः प्रवेशसमनन्तरं सा पाञ्चालिका अपि वज्रवत् कठिना भवति स्म । पाञ्चालिकायाः भञ्जनतन्त्रं वन्दनः एव जानाति स्म, न अन्ये ।

कदाचित् वन्दनः वज्रपुरीं गतवान् । तत्र वज्रनाथनामकस्य युवकस्य आपणं गत्वा सः उत्तमजातीयानि वज्राणि परीक्षमाणः इव कञ्चित् कालं स्थितवान् । तथा कुर्वन् उपायेन एकं वज्रं स्वस्य पाञ्चालिकायाः अन्तः प्रेषितवान् । तत् दृष्टवान् कश्चित् कर्मकरः आपणस्य स्वामिनं वज्रनाथं विषयम् उक्तवान् । वज्रनाथः आगत्य यदा दृष्टवान् तदा वस्तुतः आपणे एकं वज्रं न्यूनम् आसीत् ।

किन्तु वन्दनस्य पाञ्चालिकायाः उपरि तादृशं किमपि चिह्नं न आसीत्, येन सः अन्तः वज्रं पूरितवान् इति प्रमाणीकर्तुं शक्येत । तथापि सः कर्मकरः उक्तवान् यत् अहं वन्दनेन कृतं चौर्यं प्रत्यक्षतया दृष्टवान् अस्मि इति ।

तदा वन्दनः - ''भोः, एषा पाञ्चालिका अभेद्येन द्रव्येण निर्मिता अस्ति । एतादृश्यां पाञ्चालिकायाम् अहं वज्रं निक्षिप्तवान् इति यत् उच्यते तत् हास्यास्पदमेव'' इति

उक्तवान् कृत्रिमं कोपं प्रदर्शयन् ।

तथापि वज्रनाथः तं संशयेन एव पश्यन् - ''भोः ! मम कर्मकरः कदापि असत्यं न वदति । अपि च गणनायाः अनन्तरं ज्ञातमपि अस्ति यत् एकं वज्रं न्यूनम् अस्ति इति । अतः यदि वयं तां पाञ्चालिकां भञ्जयेम तर्हि भवतः आक्षेपः कोऽपि नास्ति खलु ?'' इति उक्तवान् ।

''मम कोऽपि आक्षेपः नास्ति'' इति उक्तवान् वन्दनः । तदा तस्मिन् आपणे विद्यमानाः सर्वे तां पाञ्चालिकां भञ्जयितुं प्रयत्नं कृतवन्तः । आरम्भे हस्तेन प्रयत्नं कृतवन्तः । अनन्तरं मुद्गरेण ताडितवन्तः । अन्ते वज्रकर्तनयन्त्रेण अपि कर्तनार्थं प्रयत्नः कृतः तैः । किन्तु सर्वे यत्नाः विफलाः अभवन् । पाञ्चालिकायाः किञ्चिदपि किमपि न अभवत् ।

''एतादृश्याः अभेद्यायाः पाञ्चालिकायाः अन्तः वज्रस्य निक्षेपणं तु असाध्यमेव'' इति अन्ये केचन उक्तवन्तः ।

वज्रनाथः तु - ''नष्टस्य मम वज्रस्य मूल्यं पञ्चलक्षं रूप्यकाणि । अतः भञ्जितायाः पाञ्चालिकायाः अन्तः दर्शनेन विना अहं 'वज्रं तत्र नास्ति' इत्यत्र न विश्वसिमि । एतस्याः पाञ्चालिकायाः भञ्जनार्थं कोऽपि उपायः नास्ति किम् ?'' इति तत्र सम्मिलितान् पृष्टवान् ।

तदा आपणम् आगतः कश्चित् चन्दनपुरस्थः सर्वं विषयं ज्ञात्वा - ''एतत् कार्यम् अस्माकं ग्रामस्य भेदवती तु निश्चयेन कर्तुं शक्नोति'' इति उक्त्वा तस्याः विषयं सर्वं विस्तरेण उक्तवान् ।

तदा आपणे सम्मिलिताः केचन तत् सर्वं श्रुत्वा - ''एतत् तु पञ्चतन्त्रस्य कथा इव अस्ति । यद्यपि श्रोतुं रमणीयं, तथापि विश्वसितुम् अशक्यम् । कदापि तथा सर्वं





न प्रचलति'' इति वदन्तः तस्य उपहासं कृतवन्तः ।

किन्तु वज्रनाथः उक्तवान् - ''एतादृश-विषये औदासीन्यं न प्रदर्शनीयम् । कस्मिन् वल्मीके कः सर्पः वसति इति को वा जानाति ? यदि अस्यां पाञ्चालिकायां वज्रम् अस्ति इति प्रमाणीक्रियते तर्हि एकं महाचोरं वयं बन्धुं शक्नुमः । यदि भेदवती एतां पाञ्चालिकां भञ्जयेत् तर्हि अहं तस्यै एकलक्षं रूप्यकाणि दास्यामि'' इति उक्तवान् ।

तदा वन्दनः अपि उक्तवान् - ''यदि भेदवती अपि एतां पाञ्चालिकां भञ्जयितुं न शक्नोति तर्हि वज्रनाथः मम समीपे विद्यमानानि वंशपारम्पर्येण आगतानि सर्वाणि वज्राणि योग्यं मूल्यं दत्त्वा क्रीणीयात्'' इति ।

''यदि पाञ्चालिकातः वज्रं बहिः आगच्छेत् तर्हि भवतः गृहे विद्यमानानि सर्वाणि वज्राणि निश्शुल्कं दातव्यानि'' इति वन्दनम् उक्तवान् वज्रनाथः ।

एवं सन्धिं कृत्वा उभौ अपि चन्दनपुरं प्रति प्रस्थितवन्तौ । यदा तौ ग्रामस्य समीपं गतवन्तौ तदा ग्रामात् बहिः क्रीडन्तीः काश्चन बालिकाः दृष्टवन्तौ । तासां बालिकानां मध्ये भेदवती नक्षत्राणां मध्ये चन्द्रः इव शोभमाना आसीत् । तस्याः सौन्दर्येण आकृष्टौ तौ समीपं गत्वा तस्याः विषयं श्रुत्वा 'एषा एव भेदवती' इति ज्ञात्वा आश्चर्यचकितौ अभवताम् । तावति काले अन्ये केचन ग्रामजनाः अपि तत्र सम्मिलितवन्तः ।

वज्रनाथः स्वसमीपे विद्यमानां पाञ्चालिकां प्रदर्शयन् भेदवतीम् अवदत् - ''अहं कश्चन वज्रवणिक् अस्मि । अस्याः पाञ्चालिकायाः अन्तः पञ्चलक्षरूप्यकात्मकं वज्रम् अस्ति । किन्तु एतां पाञ्चालिकां भञ्जयितुं वयं न शक्ताः । यदि भवती एतां भञ्जयेत् तर्हि अहं भवत्यै एकलक्षं रूप्यकाणि ददामि'' इति ।

तदा वन्दनः अपि आत्मनः परिचयम् उक्त्वा भेदवतीं प्रति अवदत् - ''यदि अस्यां वज्रं नास्ति इति निरूपितं भवेत्, अथवा भवती एतां भञ्जयितुं न शक्नुयात्, तर्हि भवत्या मया सह विवाहः करणीयः'' इति ।

यदा भेदवती वज्रनाथस्य हस्तात्, पाञ्चालिकां स्वीकृतवती तदा तस्याः हस्तात् च्युता सा पाञ्चालिका समीपे विद्यमानायाः

शिलायाः उपरि पतिता । अनुक्षणं पाञ्चालिका भग्ना अभवत्, वज्रं च बहिरागतम् ।

''अहो पश्यन्तु, मम वज्रं तत्र अस्ति'' इति वदन् वज्रं स्वीकृतवान् वज्रनाथः ।

तदा वन्दनः मन्दं ततः पलायनं कर्तुं प्रयत्नं कृतवान् । किन्तु चत्वारः बलिष्ठाः युवकाः अग्रे आगत्य तं गृहीतवन्तः ।

तदा वज्रनाथः तान् उद्दिश्य - ''एतं नगरं नीत्वा आरक्षकेभ्यः समर्पयन्तु । अस्य गृहे बहुस्थानेभ्यः चोरितानि बहूनि वज्राणि सन्ति इत्यपि तान् सूचयन्तु'' इति अवदत् ।

तदा 'ग्रामात् बहिः स्वपुत्रीं परितः बहवः जनाः सम्मिलिताः सन्ति' इति वार्तां श्रुत्वा 'किमपि सञ्जातं स्यात्' इति भयेन एव सीतारामनाथौ धावन्तौ तत्र आगतवन्तौ विषयं ज्ञातुम् । आगतौ पितरौ दृष्ट्वा भेदवती प्रवृत्तं सर्वं तयोः निवेद्य वज्रनाथं दर्शयन्ती - ''यदि भवती एतां मान्त्रिकपाञ्चालिकां भञ्जयति तर्हि भवत्यै लक्षं रूप्यकाणि ददामि इति एषः माम् उक्तवान् अस्ति'' इति उक्तवती ।

यदा सीतारामनाथौ प्रश्नार्थकदृष्ट्या तं दृष्टवन्तौ तदा वज्रनाथः तौ नमस्कृत्य - ''केवलं लक्षरूप्यकाणां दानं न, यदि भवन्तौ अङ्गीकुरुतः तर्हि अहं भेदवतीं वृणोमि अपि'' इति उक्तवान् ।

तस्य तत् वचनं श्रुत्वा भेदवती लज्जया मातुः समीपं गत्वा स्थितवती । तदा सीतारामनाथौ - ''आवां तु ससन्तोषम् अङ्गीकुर्वः । किन्तु अस्याः हस्तस्पर्शेन मन्त्रदण्डः अपि भग्नः जातः आसीत् इतः पूर्वम् । एतत् ज्ञात्वा अपि यदि भवान् एतां परिणेतुम् इच्छति तर्हि तत् सम्मतम् एव अस्माकम् । अद्यपर्यन्तं तादृशः धैर्यवान् लभ्येत उत न इति आवां चिन्तामग्नौ आस्व'' इति उक्तवन्तौ ।

अनन्तरं केषुचित् दिनेषु अतीतेषु वज्रनाथ-भेदवत्योः विवाहः महता वैभवेन सम्पन्नः । अनन्तरमपि तस्याः हस्तस्पर्शेन बहूनि वस्तूनि नष्टानि अभवन् । तथापि सर्वेऽपि तां वेदवती इति एव निर्दिशन्ति स्म, न तु भेदवती इति । यतः अधुना सा धनिका जाता आसीत् । तस्याः सा शक्तिः वंशस्य गौरववर्धिका इति सर्वे चिन्तयन्ति स्म ।



# यथा पिता तथा पुत्रः

कस्मिंश्चित् ग्रामे हरीशः नाम कृषिकः आसीत् । बहुदिनानन्तरं तं द्रष्टुं तस्य मित्रं प्रतापः आगतवान् । हरीशः धनिकः आसीत् । तस्य पिता कृषिकार्येण सह कुसीदवाणिज्यं कृत्वा अधिकं धनं सम्पाद्य पुत्रस्य निमित्तम् अपि सङ्गृहीतवान् आसीत् । हरीशस्य एकः एव पुत्रः आसीत् । पुत्रे विद्यायाः लेशः अपि न आसीत् । सः लघुकार्याणि कर्तुम् अपि असमर्थः मूर्खः इव दृष्टः प्रतापेन ।

अतः सः हरीशम् उक्तवान् - "भोः ! भवतः पुत्रः मन्दः इति भाति दर्शनेन । अतः तं कस्यचित् गुरोः समीपं विद्याभ्यासार्थं प्रेषयतु । नो चेत् अग्रे सः भवतः सम्पदः रक्षणं कर्तुं न शक्नुयात्" इति ।

तदा हरीशः क्रुद्धः सन् - "अये प्रताप ! विद्यावान् मनुष्यः एव बुद्धिमान् भवति इति मा चिन्तयतु । मम पिता किं पठितवान् आसीत् ? अहं किं पठितवान् ? यद्यपि मम पुत्रः किमपि न जानाति इति दृश्यते, तथापि बुद्ध्या तस्य समानः कोऽपि नास्ति । आवश्यकं चेत् परीक्षां कृत्वा पश्यतु" इति उक्तवान् ।

तदा प्रतापः हरीशस्य पुत्रम् आहूय - "वत्स ! एषः वृष्टिकालः उत, शैत्यकालः, उताहो ग्रीष्मकालः ?" इति पृष्टवान् ।

तदा बालकः - "अहं कालविषये किमपि न जानामि, परन्तु आपणे सर्वत्र आम्रफलानि एव दृश्यन्ते मया" इति उत्तरं दत्तवान् ।

तदा प्रतापः हसन् - "भवतु नाम । तानि फलानि कुतः आगच्छन्ति इति किं भवान् जानाति ?" इति पृष्टवान् ।

"कण्डोलेभ्यः" इति अनुक्षणम् उत्तरं दत्तवान् बालकः ।

तत् श्रुत्वा हरीशः कोपेन स्वपुत्रं दृष्ट्वा प्रतापम् उद्दिश्य - "प्रताप ! भवता उक्तं युक्तम् एव अस्ति । एषः बुद्धिमान् न । आम्रफलानि विपणितः आगच्छन्ति इत्यपि एषः न जानाति इति तु महते आश्चर्याय एव खलु ?" इति उक्तवान् ।

तदा प्रतापः 'यथा पिता तथा पुत्रः' इति चिन्तयन् मनसि एव हसितवान् ।





# सम्राट् अशोकः
## १२

*(स्वस्य उत्तराधिकारित्वेन कमपि अनिश्चित्य एव राजा बिन्दुसारः दिवं गतः । पितुः मरणवार्तां श्रुत्वा अपि तक्षशिलास्थः सुषेणः झटिति न प्रस्थितवान् । अशोकः तु विलम्बम् अकुर्वन् ससैन्यं पाटलीपुत्रं प्रति आगतवान् । मारयितुम् उद्युक्तान् षड् अपि सहोदरान् यमसदनं प्रति प्रेषयित्वा अशोकः ज्येष्ठानाम् अपेक्षां पुरस्कुर्वन् पितुः चितायाम् अग्निस्पर्शं कृतवान् । सर्वरीत्या अपि योग्यः युवराजः अशोकः एव राजा स्यात् इति निश्चित्य राजपुरोहितः, प्रधानमन्त्री, सेनाधिपतिः च पट्टाभिषेकं निर्वर्तयितुम् उत्साहं प्रदर्शितवन्तः । तदनन्तरम्...)*

बिन्दुसारस्य दिवङ्गतेः कारणतः दुःखसागरे निमग्नाः प्रजाः राजकुमाराणाम् अपि मरणवार्तां श्रुत्वा नितरां शोकाकुलाः जाताः । किन्तु 'राजकुमाराणां मरणस्य कारणं तेषां दुष्टप्रवृत्तिः एव, न तु अन्यत्' इति यदा प्रजाभिः ज्ञातं तदा तासां राजकुमारविषयकं दुःखं किञ्चित् उपशान्तं जातम् । राजकुमाराणां व्यवहारस्य विषये विषादः प्राप्तः जनैः ।

मध्यरात्रसमये प्रधानमन्त्री अशोकाय राज्याधिकारं समर्पितवान् । अशोकः कर्तव्यबुद्ध्या शासनसूत्राणि तु गृहीतवान्, किन्तु राजकिरीटं न धृतवान् । ''एतस्मिन् विषादमये परिसरे पट्टाभिषेकं न अङ्गीकरोति मम मनः । अतः पट्टाभिषेकः मास्तु इदानीम्'' इति उक्तवान् सः ।

मन्त्रिणः सेनाप्रमुखाः च अशोकस्य



अभिप्रायं पुरस्कुर्वन्तः तं प्रशंसितवन्तः । किन्तु तेषां मनः निश्चिन्तं तु न आसीत् । तक्षशिलास्थः सुषेणः यदाकदाचित् अपि आक्रमणं कृत्वा दौर्जन्यं प्रदर्शयेत् इति आतङ्कः आसीत् सर्वेषां मनसि ।

तक्षशिलास्थः सुषेणः नर्तक्योः वचने विश्वासं कुर्वन् 'अशोकः इतोऽपि शय्यातः उत्थातुम् अशक्नुवन् अन्तिमदिनानि गणयन् अस्ति' इति भावयित्वा निश्चिन्ततया स्थितवान् आसीत् । अत्रान्तरे सुषेणस्य माता अपरं पत्रं प्रेषितवती । पत्रे लिखितम् आसीत् - 'भवतः पितृपादाः दिवं गताः । भवान् इदानीं पाटलीपुत्रं प्रति मा आगच्छतु' इति । एतत् पत्रं पठित्वा सुषेणः क्षणकालं दिग्भ्रान्तः । पत्रम् आनीतवन्तं दूतं महता क्रोधेन दृष्टवान् सः।

महाराजस्य बिन्दुसारस्य दहनसंस्कारात् पूर्वं यत् युद्धं प्रवृत्तं, राजकुमाराणां मरणं यत् सञ्जातम्, अनन्तरम् अशोकः अधिकारसूत्राणि गृहीतवान् यत्, तत् सर्वं विस्तरेण निवेदितवान् सः दूतः ।

''हा हन्त ! महत् अन्याय्यं प्रवृत्तम् । सः दासीपुत्रः इतः परं सजीवं न तिष्ठेत् । मम खड्गः एव तस्य शिरसः च्छेदं करिष्यति । अद्यैव पाटलीपुत्रं प्रति प्रस्थातव्यम् । कः तत्र ? सेनापतिः आनीयताम्'' इति उच्चस्वरेण उक्तवान् सुषेणः ।

''इदानीं तत्र न आगन्तव्यम् इति सूचितवती अस्ति खलु महाराज्ञी ?'' इति स्मारितवान् सः दूतः ।

''अये ! अलं निषेधवचनेन !'' इति उक्त्वा तं दूतं कोपेन प्रहृत्य - ''मम वचनं विरुद्ध्य व्यवहरतः भवतः कियत् धाष्टर्यम् ? माम् एव मगधसाम्राज्यस्य उत्तराधिकारिणं कर्तुम् इष्टवान् आसीत् खलु महाराजः ? दहनसंस्कारकाले कारणान्तरेण मया न उपस्थितं चेदपि मम सिंहासनाधिकारः कथं वा लुप्येत ? मम पितुः आशयं विरुद्ध्य कृतः व्यवहारः कथं वा न्याय्यः स्यात् ? इदानीं यत् प्रवृत्तं तस्य मूलकारणं सः धूर्तः भल्लाटकः एव । अतः सः एव आदौ मम खड्गस्य आहुतिः स्यात्'' इति वदन् सुषेणः आसनात् उत्थितवान् ।

* * *

'युवराजः सुषेणः तक्षशिलातः पाटलीपुत्रं प्रति ससैन्यं प्रस्थितः अस्ति' इति वार्तां श्रुत्वा प्रधानमन्त्रि-सेनाधिपतिप्रभृतयः सर्वे चिन्ताक्रान्ताः जाताः । इतिकर्तव्यं

निर्णेतुम् अशोकः तौ स्वसमीपम् आनायितवान् । मन्त्रालोचनभवने सर्वे मन्त्रिणः अपि सम्मिलिताः । तान् उद्दिश्य अशोकः - ''सुषेणः ससैन्यं प्रस्थितः अस्ति इति वार्ता भवद्भिः सर्वैः श्रुता स्यात् एव । इदानीं किं करणीयम् इति अभिप्रयन्ति भवन्तः ?'' इति पृष्टवान् ।

तत् श्रुत्वा कोऽपि किमपि न उक्तवान् । निश्शब्दस्थितिं निवारयन् अशोकः एव पुनः उक्तवान् गम्भीरस्वरेण - ''मित्राणि ! मौनाश्रयणार्थं न एषः समयः । मगधसाम्राज्यस्य श्रेयोभिलाषिणः भवन्तः अभिप्रायकथनार्थम् अत्र निमन्त्रिताः सन्ति'' इति ।

''प्रभो, शत्रुः यदा आक्रमणं करोति तदा राज्ञा कीदृशः निर्णयः आश्रीयते इति तु विदितम् एव भवता । महाराजपदे तिष्ठता भवता एव इदानीं निर्णयः श्रावणीयः । भवतः निर्णयः सम्मतः अस्माकं सर्वेषाम्'' इति वदन् प्रधानमन्त्री परितः दृष्टिं प्रसारितवान् । 'युद्धम् एव युक्तम्' इति उक्तवन्तः अन्ये मन्त्रिणः अपि ।

''भवताम् अभिप्रायः कृतज्ञतापूर्वकं स्वीक्रियते मया । किन्तु मम आशयः भवताम् अभिप्रायात् किञ्चित् भिन्नः अस्ति । सुषेणाय एकम् अवकाशं दातुम् इच्छामि अहम्'' इति उक्तवान् अशोकः ।

''तन्नाम ?'' इति कुतूहलेन पृष्टवान् प्रधानमन्त्री ।

''सुषेणः शान्ततया यदि प्रतिगमनम् अङ्गीकुर्यात् तर्हि इदानीम् इव अग्रे अपि सः राजप्रतिनिधित्वेन तक्षशिलायां तिष्ठतु इति



मम आशयः'' इति उक्तवान् अशोकः ।

''राजप्रतिनिधित्वेन स्थितिः नाम भवतः अधीनत्वस्य अङ्गीकारः । एतत् सर्वथा न इच्छेत् सुषेणः । सः इतः प्रतिगच्छेत् चेत् अपि अल्पे एव काले स्वतन्त्रतार्थं प्रयत्नं कुर्यात् । तथा चेत् अन्ये अपि अमार्गम् अनुसरेयुः । तेन राज्ये अशान्तिः प्रसृता भवेत्'' इति उक्तवान् कश्चन मन्त्री ।

प्रधानमन्त्री क्षणकालस्य चिन्तनस्य अनन्तरम् उक्तवान् - ''मन्त्रिवर्यस्य वचनं न अतिशयोक्तिः इति भाति ममापि । तदीया ऊहा युक्ता एव अस्ति । राज्ञः आशयः अपि उदात्तः अस्ति । सुषेणः विना विरोधं तक्षशिलां प्रति गमनं यदि अङ्गीकुर्यात् तर्हि राजप्रतिनिधित्वस्य अनुवर्तनार्थम् अवकाशदानेन न काऽपि क्षतिः । तक्षशिलां



प्रतिगतः सः यदि स्वतन्त्रतार्थं प्रयत्नं कुर्यात् तर्हि यथोचितं क्रमं वयम् तत्काले आश्रयितुं शक्नुयाम एव'' इति ।

''एवं तर्हि एतं विषयं वयं कथं सुषेणं ज्ञापयेम ?'' इति पृष्टवान् अशोकः ।

''तत्कार्यम् अहम् एव करिष्यामि । नगरात् बहिः वितानं निर्माय तोरणैः तत् अलङ्कृत्य हारं गृहीत्वा सुषेणस्य स्वागतं व्याहरिष्यामि । मया सह निरायुधाः द्वित्राः ज्येष्ठाः भवेयुः । आयुधहस्तः सैनिकः कोऽपि न भवेत् । एतस्य दर्शनात् सुषेणः अवगच्छेत् यत् वयं शान्तिं निरीक्षमाणाः स्मः, न तु युद्धम् इति । यदा सः मत्समीपम् आगमिष्यति तदा अहं मालार्पणं कृत्वा भवदीयम् अभिप्रायं विशदीकरिष्यामि'' इति उक्तवान् प्रधानमन्त्री ।

''भवतः धैर्योत्सुकतां विवेकितां च अहम् अभिनन्दामि । किन्तु प्रधानमन्त्रिणः भवतः प्राणापायसम्भावना मयि अधीरतां जनयति'' इति उक्तवान् अशोकः ।

''मया आरप्स्यमाणे कार्ये अपायस्य सम्भावना अस्ति इति तु सत्यम् एव । किन्तु मम मारणात् युवराजवर्यः न किमपि साधयेत्, प्रत्युत मृत्युम् एव स्वागतीकुर्यात् । एषः विवेकः तस्य स्यात् एव इति अहं भावयामि । मगधसाम्राज्यस्य रक्षणार्थं शान्त्यर्थं च अहं मम प्राणान् सहर्षं पणीकरिष्यामि'' इति उक्तवान् प्रधानमन्त्री ।

तदा अशोकः श्लाघनपूर्वकम् उक्तवान् - ''भवतः राजभक्तिः नितरां श्लाघनीया । एतस्मिन् साहसे भवान् विजयशाली भवतु इति आशास्महे'' इति ।

यावत् सुषेणः नगरसमीपम् आगतवान् तावता प्रधानमन्त्री भल्लाटकः मालाहस्तः द्वारसमीपे स्थितवान् आसीत् । दूरात् एव सुषेणं दृष्ट्वा सः हस्तौ उन्नीय मालां प्रदर्शयन् स्वागतं व्याहृतवान् ।

सुषेणः एतत् दृष्ट्वा क्षणकालम् आश्चर्यचकितः । अनन्तरं सः महता कोपेन - ''अये अधमाधम ! अत्र उपस्थितः अस्ति वा भवान् ?'' इति वदन् खड्गम् उन्नीतवान् ।

''युवराजवर्य ! अलं साहसेन ! अलम् अविवेकेन'' इति प्रधानमन्त्री यावत् किमपि वदन् आसीत् तावता सुषेणस्य खड्गः तदीयं शिरः कर्तयित्वा भूमौ अपातयत् ।

दुर्गभित्तेः पार्श्वे स्थितस्य भवनस्य उपरि स्थित्वा सर्वं परिशीलितवान् कश्चन

दलपतिः युद्धार्थम् आज्ञां कृतवान् । तत्समनन्तरम् एव दुर्गतः निर्गतः अशोकसेनाप्रवाहः सुषेणं तत्सैन्यं च आवृत्य अतिष्ठत् । अतः सुषेणः पदमात्रम् अपि अग्रे गन्तुं न शक्तवान् । प्रधानमन्त्रिणः पुत्रः, यश्च दलपतिः अपि आसीत्, अग्रे गत्वा सुषेणस्य शिरच्छेदं कृतवान् । एतत् दृष्ट्वा नितरां दिग्भ्रान्ताः तक्षशिलायाः सैनिकाः शरणं गताः । अग्रिमे काले ते क्षमायाचनां कृत्वा मगधसैन्ये विलीनाः जाताः ।



शान्तिस्थापनार्थं निरायुधः सन् गत्वा मरणं प्राप्तवतः प्रधानन्त्रिणः भल्लाटकस्य विषये अशोकेन विशेषदुःखं प्रकाशितम् । शासनभारनिर्वहणार्थं सः रथगुप्तनामकं प्रधानमन्त्रिस्थाने नियुक्तवान् ।

शत्रवः निर्मूलाः जाताः इत्यतः मगधसाम्राज्ये शान्तिः स्थिरा जाता । प्रजानाम् अल्पः अपि क्लेशः यथा न स्यात् तथा राज्यपरिपालनं कृतवान् अशोकः । 'प्रजापालनविषये राजा अशोकः पितामहं चन्द्रगुप्तम् अपि अतिशेते' इति जनाः परस्परं वदन्ति स्म ।

अशोकस्य पट्टाभिषेकार्थं ज्योतिषिकैः उत्तमः मुहूर्तः निश्चितः । किन्तु पट्टाभिषेकस्य निर्वर्तने काचित् समस्या सर्वान् बाधते स्म ।

विदिशा बौद्धमतावलम्बिनी आसीत् इत्यतः आस्थानपुरोहितः तस्याः मगध-साम्राज्ञीत्वम् अङ्गीकर्तुं सिद्धः न आसीत् । मतान्तरस्वीकारे विदिशायाः आदरः न आसीत् । अन्यच्च सा नितराम् अस्वस्था आसीत् इत्यतः वैद्यः तां सूचितवान् आसीत् यत् तया दूरप्रयाणं न करणीयम् इति ।

एतत्कारणतः पट्टाभिषेकः यदि न क्रियते तर्हि तत् अपि क्लेशाय भवति स्म । 'एतादृशः शुभमुहूर्तः अग्रिमेषु पञ्चसु वर्षेषु न प्राप्स्यते' इति उक्तवान् आसीत् आस्थान-पुरोहितः । साम्राज्ञीं विना पट्टाभिषेकोत्सवस्य निर्वर्तनं तु अशास्त्रीयं भवति स्म ।

एतत्सर्वं पर्यालोच्य नूतनः प्रधानमन्त्री रथगुप्तः अशोकसमीपं गत्वा - ''प्रभो, भवतः कौटुम्बिकजीवनस्य विषये मया यत् उच्यते तत् औद्धत्याय स्यात् कदाचित् । तदर्थं क्षन्तव्यः अहम् । महाराज्ञ्याः विदिशादेव्याः आरोग्यम् उत्तमं नास्ति इति तु ज्ञातम् एव । सा स्वपुत्रं युवराजं महेन्द्रं



बौद्धमतसिद्धान्तान् एव बोधयन्ती अस्ति । युद्धे अनासक्तः युवराजः कथं वा विशालं साम्राज्यं रक्षितुं समर्थः भवेत् ? 'राज्यं वीरभोग्यम्' इति वचनं भवता अश्रुतपूर्वं तु न । अतः मम तु भासते यत् राज्यस्य हितं मनसि निधाय भवता अन्या काचित् राजकुमारी परिणेतव्या इति । एवं करणम् एव उत्तराधिकारिसमस्यां परिहरेत्'' इति निवेदितवान् ।

अशोकः प्रधानमन्त्रिणः एतं प्रस्तावं निराकृतवान् । एतं विषयं ज्ञातवती विदिशादेवी कदाचित् अशोकाय यशद्वारा वार्तां प्रेषितवती - ''मम आरोग्यं नितरां क्षीणम् अस्ति । एतादृशी अहं महाराज्ञीपदस्य भारं निर्वोढुं सर्वथा असमर्था अस्मि । अतः अन्या योग्या राजकुमारी तत्रभवता परिणेतव्या इति मम अपेक्षा । श्रेयस्करीम् एताम् अपेक्षां भवान् न उपेक्षेत इति भावयामि अहम्'' इति ।

एतदनन्तरम् अशोकः अन्यविवाह-प्रस्तावम् अङ्गीकृतवान् । ततः आनन्दमित्रां परिणीतवान् सः । अल्पे एव काले ज्योतिषिकैः निश्चिते मुहूर्ते पट्टाभिषेक-महोत्सवः अपि सवैभवं सम्पन्नः ।

अशोकः विदिशां तस्याः अपत्यद्वयं च विस्मर्तुं सर्वथा न शक्तवान् । पत्नीपुत्राणां विषये चिन्तयन् सः राज्यपरिपालनविषये अपि क्वचित् अनासक्तिं प्रदर्शयति स्म ।

अशोकस्य स्थितिं दृष्ट्वा कदाचित् प्रधानमन्त्री सेनाधिपतिना सह समालोचितवान् - ''अस्माकं राजा ज्येष्ठ-पत्न्याः विदिशायाः विषये आधिक्येन चिन्तयन् राज्यपरिपालनविषये औदासीन्यं प्रदर्शयन् अस्ति । यदि एवम् एव स्थितिः अनुवर्तेत तर्हि अग्रे कदाचित् सः सिंहासनं परित्यज्य उज्जयिनीं गत्वा प्रशान्तजीवनं यदि यापयेत् तर्हि अपि न तत्र आश्चर्यम् । अतः राज्यपरिपालने तस्य आसक्तिः यथा स्यात् तथा करणं, युद्धोत्साहः अधिकारप्रेम च तस्मिन् जागरितं यथा स्यात् तथा विधानं च अस्माकं कर्तव्यम् । युद्धे जयः प्राप्तः चेदेव राजानः आनन्दोत्साहवन्तः भवन्ति । शत्रुराजस्य जयात् यः आनन्दः प्राप्यते सः भवति खलु सदापि अपूर्वः ?'' इति ।

''भवतः अभिप्रायः युक्तः एव अस्ति । योग्यं कालं विचिन्त्य महाराजे शासनाकाङ्क्षायाः जागरणं तु अवश्यं करणीयम् एव'' इति उक्तवान्

सेनाधिपतिः ।

तस्मिन् एव समये वार्ता प्राप्ता यत् कलिङ्गराजः उत्तराधिकारिणम् अनिश्चित्य एव मरणं प्राप्तवान् इति । केचन अधिकारिणः एव तत्र शासनभारं निर्वहन्तः आसन् ।

कदाचित् सायङ्काले प्रधानमन्त्री उद्याने विहरतः अशोकस्य समीपम् आगत्य - "प्रभो, चन्द्रगुप्तवर्येण बिन्दुसारवर्येण च यत् जेतव्यम् इति सङ्कल्पितम् आसीत्, यस्य जयार्थं कृताः प्रयत्नाः विफलाः आसन्, तत् कलिङ्गराज्यम् इदानीं राजविहीनम् अस्ति । दूरस्थद्वीपेषु अपि स्ववाणिज्यव्यवहारः विस्तारितः आसीत् तेन देशेन । स च देशः सुसमृद्धः अस्ति अपि । बहूनां राज्ञां मैत्री अपि सम्पादिता आसीत् तत्रत्यराजेन । अतः तस्य अजेयत्वम् आसीत् अद्यावधि । किन्तु इदानीं तत्र राजविहीनता अस्ति । नायकरहितस्य देशस्य जयः न कष्टाय । अतः कलिङ्गं जेतुम् इदानीं सुवर्णावकाशः प्राप्तः अस्ति" इति निवेदितवान् ।

अत्रान्तरे सेनाधिपतिः अपि तत्र आगत्य प्रधानमन्त्रिणः आशयं समर्थितवान् ।

अशोकः प्रत्युत्तरं किमपि न दत्तवान् । मौनेन चिन्तयन् स्थितवान् सः ।

"अस्माकं सैन्येन बहोः कालतः युद्धम् एव न कृतम् । एतादृशी एव स्थितिः यदि अनुवर्तेत तर्हि सेना अलसा निष्क्रिया च भवेत् । सैन्यं तदा तदा युद्धशिक्षणं प्राप्नुवत् स्यात् । अन्यथा कालान्तरे स्वदेशस्य रक्षणे अपि असमर्थं भवेत् तत्" इति उक्तवान् सेनाधिपतिः ।

"अस्तु तावत् । कलिङ्गम् उद्दिश्य गमनार्थं सेनां सज्जीकुर्वन्तु भवन्तः । प्रस्थानसन्नाहाः अपि यथायोग्यं भवन्तु । अस्मद्गूढचराः आदौ कलिङ्गदेशं गत्वा तत्रत्यसेनाबलस्य विवरणं सङ्गृह्य आगच्छन्तु । तत्रत्येषु शासननिरतेषु अधिकारिषु परस्परसन्देहः यथा उत्पद्येत तथा अपि कश्चन प्रयत्नः करणीयः" इति सूचितवान् अशोकः ।

"यथाज्ञापयति प्रभुः । भवतः आज्ञायाः अनुगुणं सर्वविधाः सन्नाहाः अपि करिष्यन्ते" इति उक्तवान् प्रधानमन्त्री ।

ततः जैत्रयात्रार्थं मगधसाम्राज्ये बहुविधाः सन्नाहाः आरब्धाः । *- (अनुवर्तते)*

*- (अनुवर्तते)*





# वेतालकथा

## सम्मानार्हता

बहुवारं विफलतां प्राप्य अपि स्वीकृतं कार्यम् अपरित्यजन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितः । तदा शवान्तर्गतः वेतालः - ''हे राजन् ! एतादृशे घोरे अन्धकारे मध्यरात्रसमये अपि किं साधयितुं भवान् एतादृशं कठिनं परिश्रमं कुर्वन् अस्ति इति अहं न जानामि । राज्ञः सभायां तु मन्त्रिणः, सेनाधिपतयः, पण्डिताः च भवन्ति । किन्तु तेषु केचन कदाचित् स्वार्थसाधनाय, अन्येन केनापि कारणेन वा सम्प्रदायविरुद्धायाः समस्यायाः परिहारः सुलभतया प्राप्तव्यः इति कृत्वा एतादृशेषु विचित्रेषु कार्येषु राजानं प्रवर्तयन्ति । भवान् अपि तादृशानां दुष्टानां प्रेरणया एतादृशे कार्ये प्रवृत्तः स्यात् इति मम सन्देहः । यदि तत्र यथार्थता स्यात् तर्हि भवतः जागरणं मया करणीयम् एव । तदर्थं



वाहीकनामकस्य मूर्खस्य कथां वदामि । श्रद्धया शृणोतु तावत्'' इति वदन् कथाम् आरब्धवान् ।

कदाचित् सुकेशः नाम राजा आसीत् । कलासु अधिका प्रीतिः आसीत् तस्य । तस्य आस्थाने विविधेषु शास्त्रेषु निपुणाः बहवः पण्डिताः आसन् । सुकेशः यत्र कुत्रापि गमनसमये आत्मना सह पण्डितान् अपि नीत्वा विरामसमये तैः सह सम्भाषमाणः आनन्देन कालं यापयति स्म ।

तस्मिन् राज्ये प्रकृतिसौन्दर्येण प्रसिद्धः 'चित्रपुरी'नामकः कश्चन ग्रामः आसीत् । कदाचित् राजा सुकेशः पण्डितैः परिवारेण च सह तं ग्रामं गत्वा ग्रामात् बहिः कृत्रिमकुटीरान् निर्माय वासं कृतवान् ।

तस्मिन् ग्रामे वाहीकः नाम कश्चन मूर्खः आसीत् । 'विश्वे मया अज्ञातः विषयः कोऽपि नास्ति' इति सः भावयति स्म । तेन सह वादः व्यर्थः इति मत्वा तस्य ग्रामस्य पण्डिताः तेन उच्यमानं सर्वं श्रुत्वा मौनेन तिष्ठन्ति स्म । तेन वाहीकस्य मनसि 'अहं सर्वश्रेष्ठः' इत्येषः भावः दृढः अभवत् ।

वाहीकस्य मेनका नाम अनुजा आसीत् । सा साक्षात् देवलोकात् अवतीर्णा अप्सराः इव आसीत् । तस्य ग्रामस्य बहवः युवकाः 'मेनका परिणेतव्या' इति स्वप्नं पश्यन्तः आसन् । ते वाहीकस्य तोषणार्थं तं बहुधा श्लाघन्ते स्म । तेन वाहीकस्य गर्वः इतोऽपि अधिकः अभवत् ।

महाराजः पण्डितैः सह आगत्य ग्रामात् बहिः वासं कृतवान् अस्ति इति वाहीकः ज्ञातवान् । अनुक्षणं सः तेषां पण्डितानां समीपं गत्वा - ''भोः, विद्वद्वरेण्याः ! मदन्यः महापण्डितः अस्मिन् ग्रामे नास्ति इति अस्य ग्रामस्य पण्डिताः सर्वे अङ्गीकृतवन्तः सन्ति । अस्माकं ग्रामस्य युवकाः तु मां शिरसि ऊढ्वा सर्वत्र नेतुम् अपि सिद्धाः सन्ति । यद्यपि मया जीवने एतावत् साधितमस्ति, तथापि मम एका इच्छा अद्यपर्यन्तम् अपूर्णा एव अस्ति । 'भवादृशैः पण्डितैः सम्मानितः भवेयम् अहम्' इत्येव मम इच्छा'' इति उक्तवान् ।

ते पण्डिताः एतं वाहीकं महान्तं पण्डितं मत्वा शास्त्रीयान् कांश्चन प्रश्नान् पृष्टवन्तः । तेन दत्तानि उत्तराणि श्रुत्वा ते 'एषः परममूर्खः' इति ज्ञात्वा - ''भवान् परममूर्खः । भवतः उपहासार्थमेव सर्वे भवन्तं श्लाघन्ते'' इति उक्तवन्तः ।

पण्डितानां वचनं श्रुतवतः वाहीकस्य कोपः आगतः । सः तान् उक्तवान् - ''अद्यपर्यन्तं कोऽपि मम परीक्षां न कृतवान् । एवम् अपमाननम् अपि न कृतवान् । अहं भवतः उद्दिश्य 'मां सम्मानयन्तु' इति उक्तवान्, न तु 'मम परीक्षां कुर्वन्तु' इति । एतादृशान् भवतः सर्वान् महाराजः स्वस्य आस्थाने किमर्थं वा स्थापितवान् अस्ति इति अहं न अवगच्छामि'' इति ।

तस्य वचनेन पण्डिताः कुपिताः सन्तः अपि कोपम् अप्रदर्शयन्तः तम् उद्दिश्य - ''भोः वाहीक ! भवतः एतस्य प्रश्नस्य उत्तरं वयं न जानीमः । पार्श्वे विद्यमाने कुटीरे महाराजः एव अस्ति । गत्वा तम् एव पृच्छतु'' इति उक्तवन्तः ।



वाहीकः साक्षात् महाराजस्य समीपं गतवान् । महाराजस्य सौन्दर्यं दृष्ट्वा आश्चर्यचकितः वाहीकः महाराजं - ''प्रभो ! भवान् तु मन्मथः इव महासुन्दरः अस्ति । तादृशः भवान् स्वस्य आस्थाने मूर्खान् पण्डितान् किमर्थं स्थापितवान् अस्ति ?'' इति पृष्टवान् ।

तस्य वचनस्य श्रवणेनैव सः परममूर्खः इति ज्ञात्वा महाराजः - ''मम आस्थानस्य पण्डितेषु भवता का न्यूनता दृष्टा अस्ति ? वदतु तावत्'' इति उक्तवान् ।

तदा वाहीकः महता उत्साहेन - ''ते मम सम्माननं निराकृतवन्तः । एतत् एव तेषु विद्यमाना न्यूनता । भवान् तान् किञ्चित् बोधयतु । यदि ते मम सम्माननं न अङ्गीकरिष्यन्ति तर्हि भवान् तान् स्वस्य आस्थानतः प्रेषयतु'' इति उक्तवान् ।

''यदि अहं भवतः वचनं न अङ्गीकुर्यां तर्हि भवान् किं करिष्यति ?'' इति तं प्रचोदयन् पृष्टवान् महाराजः ।

राज्ञः प्रश्नस्य किम् उत्तरं दातव्यम् इति न ज्ञातवान् वाहीकः । ग्रामस्य युवकाः अपि कदाचित् तादृशेन प्रश्नेन एव तं पीडयन्ति स्म । तदा सः - ''अहं भवद्भ्यः मम भगिनीं न ददामि'' इति वदन् तान् भाययति स्म । तदा ते तस्य वचनं शृण्वन्ति स्म । वाहीकः तत् स्मृत्वा महाराजम् उद्दिश्य - ''अहं भवते मम भगिनीं दत्त्वा विवाहं न करिष्यामि'' इति उक्तवान् ।

वाहीकस्य तादृशं वचनं श्रुत्वा महाराजः उदरोपपीडं हसितवान् । 'एतादृशस्य मूर्खस्य भगिनी अपि महामूर्खा एव स्यात् । तया सह

सम्भाषणेन मम इतोऽपि सन्तोषः भवेत्' इति चिन्तयन् महाराजः वाहीकम् उद्दिश्य - ''एकवारम् अहं भवतः भगिनीं द्रष्टुम् इच्छामि। पश्चात् भवतः सम्माननस्य विषयं चिन्तयिष्यामि । भवतु किम् ?'' इति पृष्टवान् ।

वाहीकः महाराजस्य वचनम् अङ्गीकृत्य तं स्वगृहं नीत्वा तस्मै स्वभगिनीं दर्शितवान्। मेनकायाः सौन्दर्यं दृष्ट्वा महाराजः दिग्भ्रान्तः अभवत् । तया सह किञ्चित् सम्भाषणेनैव महाराजः ज्ञातवान् यत् एषा अग्रजः इव मूर्खा न, अपि तु व्यवहारकुशला, बुद्धिमती च अस्ति इति । अतः महाराजः तां - ''सुन्दरी भवती वस्तुतः महाराज्ञी भवितुम् अर्हा । किं भवती मया परिणीता भवितुम् इच्छति ?'' इति पृष्टवान् ।

तदा वाहीकः मध्ये प्रविश्य - ''महाप्रभो ! यदि आस्थानस्य पण्डितानां द्वारा भवान् मम सम्माननं कारयिष्यति तर्हि एव एषः विवाहः भविष्यति इति अहं पूर्वमेव उक्तवान् अस्मि । तत् स्मरति खलु भवान् ?'' इति उक्तवान् ।

तदा महाराजः कोपेन - ''आवाभ्याम् अङ्गीकृतं विवाहं निराकर्तुं कः अस्ति भवतः अधिकारः ? भवान् यावत् धनम् इच्छति तावत् पृच्छतु, ददामि । तेनैव भवता तृप्तेन भवितव्यम् । उन्मत्तवत् यत्किमपि पृच्छति चेत् भवतः शरीरे प्राणाः एव न भवेयुः'' इति उक्तवान् ।

तदा मेनका महाराजं शान्तं कुर्वती - ''देव ! एषः मम साक्षात् अग्रजः । अपि च एषः किमपि महत् न पृष्टवान् । एतस्य इच्छां पूरयितुं भवान् न शक्नोति इत्यपि न । भवतः विवाहं ससन्तोषम् अङ्गीकृतवत्याः मम निमित्तं भवान्



एतावदपि कर्तुं न शक्नोति किम् ?'' इति पृष्टवती ।

महाराजः अपि चिन्तितवान् यत् सा युक्तमेव वदन्ती अस्ति इति । अतः सः तत् अङ्गीकृतवान् । अनन्तरं सः स्वस्य कुटीरं गत्वा पण्डितान् सर्वान् आहूय प्रवृत्तं सर्वं तान् निवेद्य - ''मेनकायाः दर्शनेनैव अहं तस्याम् अनुरक्तः अस्मि । आवयोः विवाहार्थं भवद्भिः सहयोगः दातव्यः इति भवत्सु मम निवेदनम्'' इति उक्तवान् ।

महाराजस्य वचनं श्रुत्वा ते परस्परं मुखं दृष्टवन्तः । 'यदि वाहीकस्य सम्माननं क्रियेत तर्हि निश्चयेन जनाः अन्यथा सम्भाषणं करिष्यन्ति । 'एकस्याः स्त्रियाः निमित्तं महाराजः मूर्खस्य सम्माननं कारितवान् । पण्डिताः तत् कृतवन्तः इति या वार्ता प्रसृता भविष्यति सा तु अत्यन्तं अपमानकरी एव' इति चिन्तयित्वा सर्वे पण्डिताः स्वस्य अनङ्गीकारं सूचितवन्तः । अपि च - ''यदि अनुरोधः क्रियेत तर्हि आस्थानमेव परित्यज्य गमिष्यामः'' इति उक्तवन्तः ।

पण्डितान् किमपि वक्तुम् अशक्तः, मेनकां परित्यक्तुम् अपि अशक्तः महाराजः मनसि क्लेशम् अनुभवन् दिने दिने कृशः सञ्जातः ।

तं विचारं ज्ञात्वा मेनका तान् सर्वान् पण्डितान् अपि स्वगृहं प्रति निमन्त्रितवती । यदा ते आगताः तदा योग्यरीत्या तेषाम् आतिथ्यं कृत्वा सा तान् उक्तवती - ''भोः विद्वद्वरेण्याः, भवन्तः तु ज्ञानिनः । राज्ञः समस्यां परिहर्तुं भवन्तः समर्थाः । किन्तु किमर्थम् अस्मिन् विषये भवतां ज्ञानं राज्ञः उपकारकं जायमानं नास्ति इति तु मया न ज्ञायते'' इति ।

तदा ते पण्डिताः अपि प्रामाणिकतया





उक्तवन्तः - ''भगिनि ! भवत्या उक्तं युक्तम् एव । अस्माकं पाण्डित्यं राज्ञः उपकाराय कल्पते स्म अद्यपर्यन्तम् अपि । परम् अधुना कस्यचित् मूर्खस्य अनुजया सह तस्य विवाहकारणविषये वयं क्लेशम् अनुभवन्तः स्मः'' इति ।

''तस्य कारणं किम् ?'' इति पृष्टवती मेनका ।

''यदि विवाहः कारणीयः तर्हि अस्माभिः तस्य मूर्खस्य सम्माननं करणीयं येन अस्माभिः अपमाननं, निन्दनं च सोढव्यं भवेत् । अपि च मूर्खस्य सम्माननकरणं पण्डितस्य न भूषणम्'' इति उक्तवन्तः ।

तदा मेनका पृष्टवती - ''मम अग्रजः सम्माननाय अर्हः इति यदि अहं निरूपयिष्यामि तर्हि भवन्तः तस्य सम्माननं करिष्यन्ति किम् ?'' इति ।

''भवत्याः अग्रजस्य तादृशं ज्ञानं किं वा अस्ति ? केन आधारेण तं सम्माननार्हं निरूपयति भवती ?'' इति आश्चर्येण पृष्टवन्तः ते ।

तदा मेनका हसन्ती - ''तत् निरूपयितुं मम अग्रजस्य काऽपि अर्हता न अपेक्षिता । मम व्यवहारज्ञानमेव तदर्थम् अलम्'' इति उक्तवती ।

अनन्तरं सा विविधेभ्यः देशेभ्यः आगतैः युवकैः तस्यै आनीय दत्तानि उपायनानि तेभ्यः पण्डितेभ्यः दर्शितवती । एकस्यां पेटिकायाम् एका निम्बशलाका आसीत् । तां शलाकां काम्बोजदेशात् आगतः कश्चित् युवकः दत्तवान् आसीत् । तस्मिन् देशे श्रीगन्धवृक्षः महता प्रमाणेन उपलभ्यते स्म । अतः पाकं कर्तुं काष्ठरूपेण अपि तस्य एव उपयोगः क्रियते स्म । किन्तु तस्मिन् देशे निम्बवृक्षाः अतिविरलाः आसन् । अतः तत्रत्याः निम्बशलाकाम् अमूल्यां भावयन्ति स्म । तादृशीम् अमूल्यां निम्बशलाकाम् उपायनीकृतवान् आसीत् काम्बोजीयः युवकः ।

अन्यस्यां पेटिकायाम् एकं ताम्रस्य अङ्गुलीयकम् आसीत् । तस्मिन् देशे स्वर्णखन्यः भूरिशः आसन् । पाकार्थम् अपि सुवर्णपात्राणि एव उपयुज्यन्ते स्म । तत्र ताम्रम् अधिकं न आसीत् इति कारणेन केवलम् आभरणस्य निर्माणार्थं तस्य उपयोगः क्रियते स्म । ताम्रं शीघ्रं क्षुण्णं भवति स्म इति कारणेन तत्र किञ्चित्मात्रेण सुवर्णं योजयन्ति स्म ते । तथा किञ्चित्

सुवर्णं योजयित्वा कृतम् आसीत् तत् अङ्गुलीयकम् । तस्मिन् देशे ताम्रस्य मूल्यं सुवर्णात् अपि अधिकम् आसीत् इति कारणेन तस्य ताम्राङ्गुलीयकस्य मूल्यमपि अधिकम् आसीत् । अतः एव तत् उपायनीकृतवान् आसीत् सः तरुणः ।

अन्यस्यां पेटिकायाम् एकः अङ्गारखण्डः आसीत् । तं यः दत्तवान् तस्य देशे वज्रं सर्वत्र लभ्यते स्म । अङ्गारः तस्मिन् देशे विरलः आसीत् इति कारणेन तत्र तत् अमूल्यमेव आसीत् ।

एवं मेनका तादृशानि एव बहूनि वस्तूनि पण्डितेभ्यः दर्शितवती । तानि सर्वाणि दृष्ट्वा आश्चर्येण - "एतादृश्यः वार्ताः अन्येषां मुखात् पूर्वं श्रुताः आसन् । अद्य भवत्याः समीपे एतादृशानि विलक्षणानि उपायनानि दृष्टवन्तः वयम् । भवती अदृष्टवती एव" इति उक्तवन्तः ।

तदा मेनका उक्तवती - "भवन्तः तु पण्डिताः । अतः एतस्य सर्वस्य दर्शनेन मम अग्रजस्य मूल्यं भवन्तः ज्ञातवन्तः इति भावयामि । अतः तस्य सम्माननं कृत्वा, महाराजेन सह मम विवाहः यथा भवेत् तथा कुर्वन्तु" इति ।

तदा पण्डिताः - "भवत्याः वचनम् एव विचित्रम् अस्ति । एतेषां वस्तूनां दर्शनेन भवत्याः अग्रजः कथं सम्माननार्हः अभवत् ? कृपया भवती एव विवृणोतु" इति उक्तवन्तः ।

तदा मेनका हस्तौ बद्ध्वा - "पूज्याः ! भवन्तः सर्वे पण्डिताः प्राज्ञाः च । मां परीक्षितुं भवन्तः एवं पृच्छन्तः सन्ति इति,



अधुनैव भवन्तः सर्वं ज्ञातवन्तः सन्ति इति च अहं भावयामि" इति उक्तवती ।

तदा पण्डिताः चिन्तनम् आरब्धवन्तः । केषाञ्चित् निमेषाणाम् अनन्तरं कश्चित् वृद्धः पण्डितः उत्थाय मन्दहासेन सह मेनकायाः आशीर्वादं कुर्वन् उक्तवान् - "पुत्रि ! 'वयं पण्डिताः' इति यः अहङ्कारः आसीत् सः भवत्याः वचनैः दूरं गतः । 'मूर्खस्य सम्माननम्' इति विषये यदि अस्माभिः सूक्ष्मतया चिन्तनं कृतं स्यात् तर्हि अस्माकं कारणेन महाराजस्य एतावत्पर्यन्तं मनःक्लेशः न अभविष्यत् । मूर्खस्य सम्माननविषये भवती यथा चिन्तितवती तथा पूर्वं केनापि न चिन्तितम् । बुद्धिमती भवती अस्माकं देशस्य राज्ञी भविष्यति इति तु जनानां भाग्यम् एव" इति ।

तावति काले मेनका आत्मना प्राप्तानां वस्तूनां द्वारा किं वक्तुम् इच्छन्ती अस्ति इति अन्ये पण्डिताः ज्ञातवन्तः आसन् । अतः ते सन्तोषेण करताडनं कृतवन्तः ।

एवं कथां समाप्य वेतालः - "राजन् ! मूर्खः अपि सम्माननार्हः इति चिन्तितवतां राज्ञः सुकेशस्य आस्थानपण्डितानां विषये भवान् किं चिन्तयति ? खिन्नः राजा कथञ्चित् तोषणीयः इति कृत्वा पण्डितैः वाहीकस्य सम्माननस्य निर्णयः स्वीकृतः इति अहं भावयामि । मूर्खस्य सम्माननेन पाण्डित्यस्य अपमाननं न भवति किम् ? उपस्थिता समस्या कथमपि परिहर्तव्या इति उद्देशेन एव त्वरया ते पण्डिताः एतादृशं सम्प्रदायविरुद्धम्, असम्बद्धं कार्यं कर्तुं प्रवृत्ताः इति तु स्पष्टं खलु ? एतत् सर्वं भवतु नाम । मेनका तेषां वस्तूनां प्रदर्शनद्वारा किं वा वक्तुम् इष्टवती ? पण्डितेषु भ्रमं जनयितुं मेनका तथा उक्तवती वा ? वृद्धपण्डितेन कृतं तस्याः श्लाघनम्, अन्यैः कृतं तस्य अनुमोदनम् इत्यादिकं सर्वं हास्यास्पदम् इति न भासते किम् ? मम प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति" इति उक्तवान् ।

तदा त्रिविक्रमः उक्तवान् - "लोके विरलानि सर्वाणि वस्तूनि अपि मनुष्यस्य मनः आकर्षन्ति । यत् आकर्षकं भवति तत् अमूल्यं, प्रशंसनीयं च भवति । अत्यन्तम् अमूल्यानि इति मेनकया दर्शितानि वस्तूनि तस्मिन् देशे निरुपयुक्तानि आसन् । तद्द्वारा मेनका सूचितवती यत् 'महापण्डिताः यथा, तथा परममूर्खाः अपि क्वचित् सम्माननार्हाः भवन्ति' इति । एतत् अवगत्य पण्डिताः निर्णीतवन्तः यत् वाहीकस्य सम्माननेन 'वाहीकः लोके एव मूर्खतमः' इति निरूपितं भविष्यति इति । अतः एव मेनका राज्ञी भविष्यति चेत् प्रजाः इतोऽपि सुखेन भविष्यन्ति इति ते ज्ञातवन्तः । अपि च आपद्धर्मः इति कारणेनापि पण्डिताः सम्प्रदायस्य विरोधं कृत्वा वाहीकस्य सम्माननम् अङ्गीकृतवन्तः" इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् इत्यतः वेतालः ततः अदृश्यः भूत्वा पुनरपि वृक्षम् आरूढवान् ।



# सुन्दर्बन्स् - अण्डमान् निकोबार् द्विपानि च

*रचना* - मीरानायर् * *चित्राणि* - गौतमसेनः




कल्कत्तातः किञ्चिद्दूरम् अग्रे गमनेन अब्बीघाट् (अब्बीपुरम्) प्राप्नुमः । प्रायः क्रि.श. १८४० तमे वर्षे चैनादेशात् आगताः जनाः तत्र वासं कृतवन्तः आसन् । अब्बीघाटं चैनाटौन् इति नाम्ना अपि निर्दिशन्ति जनाः ।

हूग्लि इति नाम प्राप्तवती गङ्गानदी बङ्गालखातप्राप्तितः पूर्वं दक्षिणदिशं प्रति गता डैमण्डहार्बर्समीपे विस्तृता सती दक्षिणाभिमुखी सती प्रवहति, यच्च स्थलं, लवणनिर्माणस्थलं प्रति जनानां नयनानयनार्थम् उपयुज्यमाना विद्युत्नौका, लघुनौका इत्यादीनां स्थापनाय एतत् स्थलम् उपयुज्यते ।

नौकास्थानस्य दक्षिणदिशि बहुधा विभक्ता सती गङ्गानदी प्रवहन्ती तस्याः पूर्वदिशि प्रवहता बहुशाखेन ब्रह्मपुत्रेण मिलति । अपि च प्रपञ्चे एव अतिविशालं नदीमुखजभूमिं निर्माति । अत्यन्तं विशालाभ्याम् एताभ्यां नदीभ्यां सह आगतया मृत्तिकया कदाचित् अस्याः नदीमुखजभूमेः पूर्वभागे नूतनानि द्वीपानि सृष्टानि भवन्ति । तस्मिन् एव समये प्रधानं भूभागं समुद्रः अतिक्रामति अपि क्वचित् ।

कल्कत्तातः बङ्गालखातं प्रति गमनसमये एव मध्येमार्गम् एतस्यां नदीमुखजभूम्यां प्रवृद्धं वनं दृष्टिगोचरं भवति, यच्च पूर्वदिशि बाङ्ग्लादेशपर्यन्तम् अपि प्रसृतम् अस्ति । १५,५०० च.कि.मी. विशालम् इदं वनं विश्वे एव अत्यन्तं विशालं म्याङ्ग्रोव्वनम् इति प्रसिद्धिं गतम् अस्ति ।

शिरसः पृष्ठभागे कृत्रिममुखं धृतवन्तः धीवराः



एतत् वनं 'सुन्दर्बन्स्' इति नाम्ना निर्दिश्यते । 'सुन्दरं वनम्' इति, 'सुन्दरीनामकैः वृक्षैः समृद्धं वनम्' इति वा एतस्य पदस्य अर्थः । सुन्दर्बन्स्तः कल्कत्तानगरेण अपेक्षितप्रमाणेन आम्लजनकम् अपि प्राप्यते । एतत् कल्कत्तानगरस्य रक्षकदुर्गम् इव अस्ति । एतानि वनानि यदि न अभविष्यन् तर्हि कल्कत्तानगरं, तत् परितः विद्यमानान् प्रदेशान् च समुद्रः आक्रान्तवान् अभविष्यत् इति भूगोलशास्त्रज्ञाः वदन्ति ।

शीतकाले रात्रिसमये सुन्दरबन्स्मध्ये वृक्षाणाम् उपरि कोटिशः खद्योतानां मेलनेन काचित् विशिष्टा कान्तिः निर्मिता भवति । पङ्किलात् जलात् वायोः निमित्तम् उपरि आगतानां दण्डवत् उन्नतानां सूचीवृक्षाणां मध्यभागात् नावः चलन्त्यः भवन्ति । सुन्दरी, गोरान्, गेर्वा, थुण्डाल् इत्यादिजातीयाः वृक्षाः तृणविशेषः च अस्मिन् प्रदेशे स्वयं वर्धन्ते ।

रायल् बेङ्गाल्टैगर्स्नामकाः महाव्याघ्राः, भयजनकाः नक्राः, षार्क्मीनाः, गोधाः, कूर्माः, सर्पाः, मीनाः, कर्कटकाः, शम्बूकाः, मधुमक्षिकाः इत्यादयः अनेके महान्तः, लघवः च जीवाः अस्मिन् वने वसन्ति । एतावद्भिः जीवराशिभिः एकत्र एव यत्र वासः क्रियते तादृशं स्थानं विश्वे अत्यन्तं विरलतया उपलभ्यते ।



रायल् बेङ्गाल् टैगर्स्

अश्वत्थसदृशे अस्मिन् म्याङ्ग्रेव्वने ३००-५०० महाव्याघ्राः सन्ति । विश्वे एव अधिकसंख्यया व्याघ्रैः अत्र वासः क्रियते इति श्रूयते । एते व्याघ्राः बहुदूरपर्यन्तं जले तरणं कर्तुं शक्नुवन्ति । एषः तेषु विद्यमानः कश्चन विशेषः । मधु सङ्ग्रहीतुं, मीनग्रहणाय च अस्य प्रदेशस्य व्याधाः एतत् वनम् आगच्छन्ति । व्याघ्राणां आक्रमणात् आत्मनः रक्षणम् एतैः प्रतिदिनं करणीयं भवति । प्रतिदिनं तैः प्राप्यमाणा महती विपत् एषा । अतः एते व्याधाः स्वशिरसः पृष्ठभागे मनुष्यस्य मुखेन सदृशं कृत्रिममुखं धरन्ति । 'मां पश्यन् अस्ति एषः' इति चिन्तयन् व्याघ्रः अनुक्षणम् आक्रमणं कर्तुं भयम् अनुभवति इति कारणेन ते तथा कृत्रिममुखं धरन्ति । मृगयार्थं गमनात् पूर्वं व्याघ्रदेवतारूपां वनदेवतां दक्षिणिरायदेवीं पूजयित्वा अनन्तरमेव प्रतिष्ठन्ते ते ।

सर्वकारेण 'संरक्षितारण्यम्' इति घोषणात् पूर्वम् अत्र जनाः वनं बहुधा नाशयन्ति स्म । ह्यालिडे, सज्नाकालि, लोदियान् इत्यादिद्वीपानि 'संरक्षितरण्यप्रदेशाः' इति सर्वकारेण उद्घुष्टमस्ति । क्रि.श. १९७२ तमे वर्षे प्राजेक्ट्टैगर्नामिका व्याघ्रसंरक्षणयोजना आरब्धा अस्ति अपि । तदारभ्य तत्र व्याघ्राणां मारणं निषिद्धं जातम् । अपि च व्याघ्राणां रक्षणार्थं कार्यं च विशेषतः प्रचलत् अस्ति तत्र । म्याङ्ग्रोव्वनं

'राष्ट्रियोद्यानम्' इति 'व्याघ्रधाम' इति च क्रि.श. १९८४ तमे वर्षे घोषितम् अस्ति । विश्वे शास्त्रीयपद्धत्या संरक्ष्यमाणं प्रथमं म्याङ्ग्रोव्वनम् अस्ति सुन्दरबन्स् । एतत् विश्वस्य 'वंशपारम्पर्यक्रमात् आगतः उपहारः' इति अपि घोषणा कृता विद्यते ।

गङ्गामुखजभूमिस्थस्य सुन्दरबन्स्-प्रदेशस्य १०२ द्वीपेषु प्रमुखम् अस्ति सागरद्वीपः । म्याङ्ग्रोव्वृक्षाणां नाशनेन एतानि द्वीपानि निर्मितानि सन्ति । एतत् द्वीपं रवीन्द्रनाथटागूरस्य अत्यन्तं प्रियम् आसीत् । अस्मिन् द्वीपे वसन् एव सः बहूनि सङ्गीतप्रधानगीतानि, कानिचन प्रसिद्धानि लेखनानि च लिखितवान् इति श्रूयते ।

अस्य द्वीपस्य दक्षिणान्त्यभागः 'गङ्गासागर'नाम्ना निर्दिश्यते । मकरसङ्क्रमणदिने (जनवरीमासस्य चतुर्दशे दिनाङ्के) पवित्रं गङ्गास्नानं कर्तुं लक्षशः जनाः अत्र सम्मिलन्ति । गङ्गास्नानस्य अनन्तरं ते प्रसिद्धस्य कपिलमुनिदेवालयस्य दर्शनं कुर्वन्ति । अस्मिन् अवसरे दिनत्रयं यावत् अत्र उत्सवः प्रचलति ।

क्रि.श. १८२१ तमे वर्षे निर्मितं दीपगृहम् अद्यापि सम्यक् कार्यं कुर्वत् अस्ति इति तु अत्रत्यः विशेषः । एतत् दीपगृहं समुद्रात् २६ मीटर्-औन्नत्ये अस्ति । यदा परिसरः निर्मलः भवति तदा रात्रौ एतस्य प्रकाशः समुद्रे १६ कि.मी. दूरात् अपि दृश्यते ।

कल्कत्तातः १००० कि.मी. दूरे बङ्गालखातसमुद्रे अस्ति अण्डमान्-निकोबार्द्वीपानां राजधानी पोर्टब्लेयर् । अस्माकं देशस्य पूर्वसमुद्रतीरस्य समानान्तरेण व्याप्तानि सन्ति अण्डमान्-निकोबार्द्वीपानि । अर्धमण्डलाकारतोरणवत् वक्राणि ७८० कि.मी. दूरं यावत् व्याप्तानि च सन्ति एतानि द्वीपानि । उत्तरदिशः अन्ते विद्यमानं ल्याण्ड्फाल्द्वीपं बर्मदिशात् १९० कि.मी. दूरे, दक्षिणदिशः अन्ते विद्यमानं ग्रेट्निकोबार्द्वीपं इण्डोनेषियातः १५० कि.मी. दूरे च अस्ति ।

अण्डमान् इति नाम 'हनुमान्' इत्येतस्य शब्दस्य एव अपभ्रंशः इति केचन वदन्ति । पूर्वकालतः एतस्य द्वीपस्य अभिज्ञाः मलेशियाजनाः हनुमन्तं 'हाण्डमान्' इति नाम्ना निर्दिशन्ति स्म । तत् द्वीपमपि ते तेनैव

**गङ्गासागर् कपिलमुनिदेवालयस्य सान्निध्यम्**




अण्डमान्तीरम्

नाम्ना निर्दिशन्ति स्म । कालक्रमेण तेनैव अण्डमान् इति रूपान्तरं प्राप्तम् इति जनाः वदन्ति ।

निकोबार्द्वीपानि पुरातनकाले 'नक्कावरम्' इति नाम्ना प्रसिद्धानि आसन् । अत्रत्याः मूलनिवासिनः वनवासिनः वस्त्ररहिताः नग्नाः एव सञ्चरन्ति स्म इति कारणेन तस्य द्वीपस्य तत् नाम आगतं स्यात् । क्रि.श. १८ शतके एतानि द्वीपानि प्रविष्टवन्तः पोर्चुगीस्जनाः एतत् द्वीपं 'नाकुबार्' इति निर्दिष्टवन्तः । तदेव नाम गच्छता कालेन 'निकोबार्' इति परिवृत्तम् अभवत् ।

ब्रिटिष्शासनकाले उत्तर-अण्डमान्प्रदेशे कारागृहाणि निर्मितानि । १८५७ तमे वर्षे सैनिकविद्रोहे ये भागं गृहीतवन्तः तान् सैनिकान्, तदनन्तरं बद्धान् राजकीयजनान् च तत्र स्थापयन्ति स्म आंग्लेयाः । तस्मिन् काले तेषां द्वीपानां नामश्रवणेन एव जनाः भीताः भवन्ति स्म । तत्र पानजलमपि लवणमयं, कृष्णवर्णीयं च भवति स्म इति कारणेन, परितः सर्वत्र हरित्सस्यवृद्धिः च आसीत् इति कारणेन च सः प्रदेशः 'कालापानीप्रदेशः' इति निर्दिश्यते स्म ।

भारतस्य स्वातन्त्र्यस्य अनन्तरं तत् सर्वम् अदृश्यतां गतम् । स्वातन्त्र्यप्राप्तेः दश-वर्षाणाम् अनन्तरं क्रि.श. १९५६ तमे वर्षे नवम्बर्मासे प्रथमदिनाङ्के अण्डमान्-निकोबार्द्वीपानि भारतस्य केन्द्रशासितप्रदेशाः अभूवन् ।


अण्डमान्द्वीपस्य धीवराः




# गोविन्दस्य बुद्धिमत्ता

पूर्वं राधापुरे गोविन्दः नाम आपणिकः आसीत् । सः मधुरखाद्यानां वाणिज्येन बहु धनं सम्पादितवान् । तस्य गीतानामिका एका पुत्री आसीत् । तां यः वृणोति सः गोविन्दस्य आपणस्य अपि उत्तराधिकारी भविष्यति इति कारणेन बहवः तस्य पुत्रीं परिणेतुम् अग्रे आगतवन्तः ।

गोविन्दः अपि स्वपुत्र्याः निमित्तं योग्यं वरम् अन्विष्यन् आसीत् । 'सुभाषस्य पुत्रः योग्यः अस्ति । सः गीतां परिणेतुम् इच्छति' इति विज्ञाय गोविन्दः सुभाषस्य समीपं गत्वा तेन सह सम्भाषमाणः एवम् उक्तवान् - ''भवतः पुत्रः योग्यः वरः इति अहं जानामि । तथापि मया लघुपरीक्षा क्रियते । कस्यचित् साधोः मार्गदर्शनानुसारं मया भाविनः वरस्य कृते अस्माकं गृहे विशेषभोजनव्यवस्था क्रियते। भोजन-समनन्तरम् एव वरः मम पुत्र्याः योग्यः उत न इति विषयम् अहं संन्यासिनः अनुग्रहात् ज्ञातुं शक्नोमि'' इति ।

गोविन्दस्य वचनं श्रुत्वा सुभाषस्य यद्यपि आश्चर्यं जातं, तथापि पुत्रस्य प्रेषणेन कापि हानिः नास्ति इति मत्वा सः पुत्रं गोविन्दस्य गृहं प्रति भोजनार्थं प्रेषितवान् ।

गोविन्दः वरं स्वगृहं नीत्वा मध्याह्नपर्यन्तं तेन सह सम्भाषमाणः उपविष्टवान् । पश्चात् विशेषभोजनार्थं तं नीतवान् । भोजनस्य समनन्तरं गोविन्दः वरम् उद्दिश्य - ''भवता सह मम पुत्र्याः विवाहकरणं न युक्तम् इति मम भासते । एतं विषयं भवतः पितरं वदतु । अपि च अहं क्षमां प्रार्थितवान् इत्यपि वदतु'' इति उक्तवान् ।

गोविन्दस्य उत्तरं श्रुतवतः सुभाषपुत्रस्य यद्यपि निराश अभवत्, तथापि अनन्य-गतिकतया सः तूष्णीं ततः गतवान् ।

अनन्तरम् आगतेभ्यः त्रिभ्यः वरेभ्यः

-भामहः



अपि विशेषभोजनं दत्त्वा पश्चात् ते योग्याः वराः न इति कारणेन तान् निराकृत्य प्रतिप्रेषितवान् गोविन्दः ।

कदाचित् गोविन्दस्य आत्मीयमित्रं सञ्जीवः आगत्य - ''किं भोः ! गोविन्द ! आगतेभ्यः सर्वेभ्यः वरेभ्यः भवान् भूरिभोजनं दत्त्वा प्रेषयन् अस्ति इति वार्ता श्रुता । कः विशेषः?'' इति पृष्टवान् ।

तदा गोविन्दः हसन् उक्तवान् - ''यावत् योग्यः वरः न लभ्यते तावत् रहस्योद्घाटनं न करणीयम् इति साधुः उक्तवान् अस्ति । अतः तावत्पर्यन्तं सहनया प्रतीक्ष्यताम्'' इति ।

तदा सञ्जीवः अपि हसन् - ''भवतु । भवान् यथा इच्छति तथैव करोतु नाम । मम कोऽपि आक्षेपः नास्ति । जयपुरे मम भगिनी अस्ति खलु ? तस्याः तृतीयः पुत्रः भवतः पुत्र्याः योग्यः वरः इति अहं भावयामि । तस्मै अपि भूरिभोजनं दास्यति किम् ?'' इति पृष्टवान् ।

''भूरिभोजनं तु निश्चयेन दास्यामि । कन्यादाननिर्णयः तु परीक्षानन्तरम् एव । श्वः एव तं भोजनार्थम् आह्वयाम'' इति उक्तवान् गोविन्दः ।

''तथैव अस्तु'' इति सञ्जीवः अङ्गीकृतवान् । पश्चात् तौ द्वौ अपि अनन्तरदिने जयपुरं गत्वा विषयम् उक्त्वा वरं भोजनार्थम् आहूतवन्तौ । वरस्य मातापितरौ यद्यपि आश्चर्यचकितौ, तथापि ताभ्यां सह पुत्रस्य रमेशस्य प्रेषणम् अङ्गीकृतवन्तौ ।

वरेण सह स्वग्रामं प्राप्तवान् गोविन्दः तम् उद्दिश्य - ''भोः रमेश ! अद्य रात्रौ भवान् भवतः मातुलस्य गृहे एव वसतु । श्वः तेन सह अस्माकं गृहम् आगच्छतु'' इति उक्त्वा मित्रं प्रति - ''सञ्जीव, भवान् अपि श्वः एतेन सह मम गृहम् आगच्छतु'' इति निमन्त्रितवान् ।

सञ्जीवः 'अस्तु' इति अङ्गीकृतवान् । अनन्तरदिने प्रातःकाले सः रमेशेन सह गोविन्दस्य गृहम् आगतवान् । आगतौ तौ प्रकोष्ठे उपवेश्य सम्भाषणम् आरब्धवान् गोविन्दः । बहुसमयः अतीतः । तदा सञ्जीवः उक्तवान् - ''किं भोः गोविन्द ! इतोऽपि पाकः किं न सिद्धः ? मम तु महती बुभुक्षा'' इति ।

तदा गोविन्दः सञ्जीवम् उद्दिश्य - ''मित्र ! कृपया क्षम्यताम् । भूरिभोजनम्

इति कारणेन पाककार्ये विलम्बः भवन् अस्ति । अतः अधुना एकचषकपरिमितं क्षीरं स्वीक्रियताम्'' इति उक्तवान् ।

तदा रमेशः तं निवारयन् उक्तवान् - ''श्रीमन् ! भोजनात् पूर्वम् अन्यस्य आहारस्य खादनस्य पानस्य वा अभ्यासः नास्ति मम । मम मातुलः इच्छति चेत् तस्मै क्षीरं ददातु कामम्'' इति ।

भागिनेयस्य वचनं श्रुत्वा सञ्जीवः अपि सङ्कोचम् अनुभवन् - ''मम अपि अधुना किमपि मास्तु'' इति उक्तवान् ।

अर्धघण्टायाः अनन्तरं भोजनार्थम् आह्वानम् आगतम् । भोजने अनेकविधानि भक्ष्याणि व्यञ्जनपर्पटादीनि च आसन् । सर्वं त्रिषु पर्णेषु परिविष्टम् आसीत् । गोविन्दः तौ उपवेष्टुं उक्त्वा स्वयम् एकत्र उपविष्टवान् । सञ्जीवः आगत्य मित्रस्य पार्श्वे उपविष्टवान् । किन्तु रमेशः तथैव स्थित्वा - ''श्रीमन्, पर्णे आवश्यकतातः अपि अधिकम् एव परिविष्टम् अस्ति । तत्सर्वम् अहं खादितुं न शक्नोमि । अतः इदानीमेव ततः किञ्चित् निष्कासनं वरम्'' इति उक्तवान् ।

''पाषाणमपि जीर्णयितुं सामर्थ्यं भवेत् एतस्मिन् वयसि । सङ्कोचः मास्तु । सम्यक् भोजनं करोतु'' इति उक्तवान् गोविन्दः ।

तदा रमेशः - ''मिताहारस्य अभ्यासः दीर्घकालम् आरोग्यं सम्यक् रक्षिष्यति । सः विचारः भवता अपि ज्ञातः स्यात् एव खलु ?'' इति उक्तवान् ।

ततः गोविन्दस्य सूचनानुसारं गीता तस्य पर्णात् किञ्चित् आहारं निष्कासितवती ।



अनन्तरमेव रमेशः भोजनं कृतवान् ।

भोजनस्य अनन्तरं ताभ्यां ताम्बूलं यच्छन् गोविन्दः रमेशम् उक्तवान् - ''किं भोः रमेश ! अस्माकं गृहस्य भोजनं भवते न अरोचत इति भावयामि । अतः एव भवान् सम्यक् भोजनं न कृतवान्'' इति ।

तदा क्षणं यावत् मौनं स्थित्वा रमेशः - ''तथा किमपि न । भोजनं तु बहु सम्यक् एव आसीत् । किन्तु अहं यावदपेक्षितं तावदेव खादितवान्'' इति वदन् कृतं पाकं इतोऽपि रुचिकरं कर्तुं कथं शक्यम् आसीत् इत्यपि उक्तवान् विस्तरेण ।

तस्य वचनं श्रुत्वा गोविन्दः सन्तोषेण - ''भोः सञ्जीव, एषः एव मम पुत्र्याः योग्यः वरः इति साधुः मम कर्णे वदन् अस्ति'' इति उक्तवान् ।

तदा सञ्जीवः - "भवान् साधोः विषयं कल्पयित्वा वदन् अस्ति इति अहं जानामि। भवान् कीदृशीं परीक्षां कृतवान् अस्ति कृपया विवृणोतु तावत्" इति गोविन्दम् उक्तवान्।

सञ्जीवस्य वचनं श्रुत्वा गोविन्दः उच्चैः हसन् - "सञ्जीव ! अहं मधुरखाद्यानां वाणिज्यं करोमि इति भवान् जानाति एव। तादृशे अपणे उपविश्य वाणिज्यं यः करोति तस्य जिह्वानियन्त्रणं भवेत् एव। अन्यथा लब्धस्य सर्वस्य भक्षणेन केषुचिदेव दिनेषु तस्य आरोग्यं नष्टं भवेत्। अपि च यः खाद्यनिर्माणविषयं जानाति सः एव रुचिकराणि खाद्यानि निर्माय वाणिज्ये अधिकं लाभं सम्पादयति। तदर्थम् एव अहम् एतादृशीं परीक्षां कृतवान्। भवतः भागिनेये मया अपेक्षिताः गुणाः सर्वे सन्ति। भगवतः कृपया एव एतादृशः वरः लब्धः अस्ति। इतः परम् अहं मम पुत्रीं वाणिज्यं च एतस्मै समर्प्य निश्चिन्ततया जीवितुं शक्नोमि" इति उक्तवान्।

तदा सञ्जीवः आश्चर्यम् अनुभवन् - "किं भोः, जामातुः चयनं केवलं भवतः इच्छानुसारमेव प्रचलति किम् ? पुत्र्याः अङ्गीकारः न अपेक्षितः किम् अस्मिन् विषये ?" इति पृष्टवान्।

तदा गोविन्दः उक्तवान् - "भवन्तौ यदा भोजनं समाप्य बहिः आगत्य उपविष्टवन्तौ तदा एव अहम् अन्तः गत्वा पुत्रीं पृष्ट्वा आगतवान् अस्मि। मम पुत्री अपि एतं वरम् इच्छति। अतः अधुना रमेशस्य सम्मतिमात्रम् अपेक्ष्यते" इति।

तदा सञ्जीवः भागिनेयं पश्यन् - "किं भोः रमेश ! भवतः अभिप्रायः कः ? भवान् एतस्य पुत्रीं परिणेतुम् इच्छति किम् ? निस्सङ्कोचं स्वस्य अभिप्रायं वदतु" इति उक्तवान्।

तदा रमेशः - "गोविन्दवर्यः तु योग्य-रीत्या निर्णयं स्वीकर्तुं समर्थः अस्ति। तादृशम् उद्दिश्य अहं - 'भवतः पुत्रीं न परिणेष्यामि' इति वक्तुं कथं वा शक्नोमि ?" इति उक्तवान्।

"अहो, भाविनः जामातुः मुखात् अधुना एव श्लाघनं प्राप्तवान् खलु भवान् ! अहो बुद्धिमत्ता भवतः !" इति वदन् सञ्जीवः मित्रं गोविन्दम् अभिनन्दितवान्।



आंग्लान् ससुखीकृतवन्तः धीराः - ४

# सामन्तराजानां विद्रोहः

*रचना* - मीरा उग्रा ❖ *चित्रम्* - गौतमसेनः

*क्रि.श. १७९८तमे वर्षे अक्टोबर्मासे पाञ्चालकुरुच्चि-प्रदेशस्य सामन्तराजस्य वीरपाण्ड्य-कट्टबोम्मन्वर्यस्य शूलारोपणस्य अनन्तरं आंग्लाधिकारिणः किञ्चित् समाधानं प्राप्तवन्तः ।*










लुण्ठनं, चौर्यं च अधिकम् अभवत् ।




अस्माकं सामन्तराजः मृतः । लघुछुरिकां स्थापयितुम् अपि नास्ति अस्माकम् अधिकारः । अस्मान् के वा रक्षन्ति ?
भोः, ऊमेदोरै रक्षिष्यति । सः इतोऽपि जीवति ।
तं वयं कारागृहात् मोचयाम ।


वीरपाण्ड्यकट्टबोम्मन्वर्यस्य द्वौ सहोदरौ सप्तदश अनुयायिनः च पालयंदुर्गे बन्दिनः आसन् । ग्रामीणाः सर्वे तत्र सम्मिलितवन्तः ।


वणिजः इव वेष धृत्वा
बन्दिनां कृते अपेक्षितानि पुष्पाणि, पत्राणि, अन्यानि पूजावस्तूनि च आनीतवन्तः स्मः ।


पूजावस्तूनां स्यूते आयुधानि अपि आसन् । सूर्यास्तस्य अनन्तरम् ....


दिग्भ्रान्तान् रक्षकसैनिकान् सुलभतया जित्वा बन्दिनः ततः पलायितवन्तः ।

सेवत्तय्यं पाञ्चालकुरच्चिप्रदेशस्य नूतनराजत्वेन नियोज्य जनाः तस्य अनुमोदनं कृतवन्तः ।




शिवगङ्गाप्रदेशस्य मरुदुपाण्ड्यन्, दिण्डुगल्प्रदेशस्य गोपालनायकः, मलबारप्रदेशस्य केरलवर्मा, अन्ये केचन संस्थानाधिपतयः च तैः सह मिलितवन्तः ।







सेवत्तय्यस्य विजयवार्तां श्रुत्वा आश्चर्यचकितः कोलिन् मकाले तिरुनेल्वेलितः प्रस्थाय पाञ्चालकुरुच्चिम् आगत्य आक्रमणं कृतवान् ।




ऊमैदोरैवर्यस्य जनाः महता धैर्येण युद्धं कृतवन्तः । मेकाले प्रतिगतवान् ।

किन्तु ३१.३.१८०१ दिनाङ्के पुनः आक्रमणं जातम् । अधुनापि मेकालेवर्येण पराजयः प्राप्तः ।



 

केषाञ्चित् दिनानाम् अनन्तरं प्रवृत्ते आक्रमणे अड्जुटेण्ट् जनरल् आग्नूवर्यः दुर्गस्य भित्तीः भञ्जितवान् ।




मरुदपाण्ड्यन्वर्यः अन्यैः सहोदरैः मिलितवान् । रामनाथपुरदुर्गं, तिरुपत्तूरुदुर्गम् अन्यानि दुर्गाणि च तेषां वशानि अभवन् । जुलैमासे ऊमैदोरैवर्यः मधुरैनगरं स्वायत्तीकृतवान् ।



गोरिल्लायुद्धपद्धत्या ब्रिटिष्जनानां पीडनम् आरब्धवन्तः ते ।

तस्मिन् एव समये ब्रिटिष्जनाः स्वस्य बलं वर्धितवन्तः ।




यद्यपि सामन्तराजाः निर्भयेन युद्धं कृतवन्तः, तथापि बहुत्र तैः पराजयः प्राप्तव्यः अभवत् ।




मरुदपाण्ड्यं, तस्य सहोदरं वेल्लैयपाण्ड्यं, तयोः पुत्रान् बान्धवान् च आंग्लेयाः बद्धवन्तः । तेनैव क्रमेण गोपालनायकसदृशाः विद्रोहिणः सामन्तराजाः अपि मृताः अभवन् । क्रि.श. १८०१तमे नवम्बर् १६ दिनाङ्के सेवत्तय्यः ऊमैदोरै च पाञ्चालकुरिच्चिप्रदेशे शूलम् आरोपितौ ।



सार्धद्विशतवर्षाणि यावत् अनुवृत्तां सामन्तराजपद्धतिम् आंग्लेयाः निष्कासितवन्तः । ब्रिटिष्सेनायाः गौरवस्य च्युतिः भवेत् इति शङ्कया ते पाञ्चालकुरिच्चिप्रदेशस्य नाम एव सर्वकारीयात् उल्लेखग्रन्थात् निष्कासितवन्तः ।



# महाभारतम्

उत्तरः कौरवसैन्यं जितवान् यत्, धेनूनाम् विमुक्तिं साधितवान् यत्, तत्र कश्चित् देवः साहाय्यं कृतवान् इति ज्ञातवान् विराटराजः - ''तादृशं महोपकारं कृतवन्तं तं देवम् अहं द्रष्टुम् इच्छामि । तस्मै पूजादिकं समर्पयितुम् इच्छामि च'' इति उक्तवान् ।

तदा उत्तरः - ''सः देवकुमारः तत्रैव अन्तर्हितः जातः । श्वः परश्वः वा तस्य दर्शनम् अस्माभिः लभ्येत'' इति उक्तवान् । 'सः देवकुमारः पुरतः नपुंसकवेषेण विद्यमानः बृहन्नला एव, न तु अन्यः' इत्येतं विषयं न ज्ञातवान् विराटराजः ।

विराटस्य अनुमतिं प्राप्य एव अर्जुनः युद्धभूमितः आनीतानि कौरववीराणाम् उष्णीषाणि उत्तरायै दत्तवान् ।

अनन्तरम् उत्तरः, धर्मराजः, अर्जुनः च मिलित्वा अग्रिमकार्यविषये एकान्ते उपविश्य चर्चां कृतवन्तः ।

दिनत्रयानन्तरं पञ्च पाण्डवाः अपि प्रातः-कर्मादिकं समाप्य स्नात्वा, शुभ्रवस्त्रादिकं धृत्वा विराटस्य सभां गतवन्तः । तत्र राजकुमारेभ्यः स्थापितेषु आसन्देषु उपविष्टवन्तः ते ।

राजकार्यादीनाम् अवलोकनार्थं तत्र आगतः विराटराजः उन्नतेषु आसनेषु उपविष्टान् पाण्डवान् दृष्ट्वा क्षणकालं यावत् स्तब्धः जातः । ततः सः महता कोपेन धर्मराजम् उद्दिश्य - ''अये ! भवन्तं द्यूतार्थं नियुक्तवान् अस्मि । परन्तु इदानीं सभागौरवम् अतिक्रम्य भवान् सिंहासने उपविष्टः अस्ति खलु ! किम् एतत् ?'' इति पृष्टवान् ।

तदा अर्जुनः शान्तस्वरेण - ''राजन् ! एषः महात्मा इन्द्रस्य आसन्दे उपवेष्टुं योग्यः



अस्ति । तादृशः एतस्मिन् लघुसिंहासने उपवेष्टुम् अपि अनर्हः इति भवान् मन्यते किम् ? एषः धर्मस्वरूपी महाबलशाली, राजर्षिः च अस्ति । मनुः इव लोकरक्षणं कर्तुं समर्थः अस्ति । एषः यदा कौरवसाम्राज्यं पालयति स्म तदा एतस्य सहस्त्रगजबलं, त्रिंशत्सहस्त्ररथाः च आसन् । शकुनिकर्णादीनां सहकारं प्राप्तवान् दुर्योधनः अपि एतस्य बलात् भीतः भवति स्म । एतादृशः एषः सिंहासने उपवेष्टुम् अयोग्यः किम् ?'' इति पृष्टवान् ।

विराटराजः एतत् वचनं श्रुत्वा आश्चर्येण - ''एषः कुन्तीदेव्याः ज्येष्ठपुत्रः धर्मराजः किम् ? यदि एषः धर्मराजः एव, तर्हि एतस्य सहोदराः भीमार्जुन-नकुल-सहदेवाः कुत्र ? द्रौपदी च कुत्र ? तान् न अभिज्ञातवान् खलु अहम् !'' इति उक्तवान् ।

तदा अर्जुनः - ''वललनाम्ना यः भवत्समीपे पाचकरूपेण आसीत् सः एव भीमः । गन्धर्वान् जित्वा द्रौपद्याः कृते सौगन्धिकापुष्पम् आनीतवान् महापराक्रमी एषः एव भीमः । कीचकवधं कृतवान् गन्धर्वः अपि एषः एव । एतादृशकार्यम् अन्येन कर्तुं शक्यं किम् ? भवतः अश्वान् यः अत्युत्तमरीत्या पालितवान् सः एव नकुलः । धेनुपालनं यः कृतवान् सः एव सहदेवः । एतौ द्वौ अपि महारथौ । सैरन्ध्रिः एव द्रौपदी । अहम् अस्मि अर्जुनः । राजन् ! भवतः आश्रये वयम् आस्म इति कारणतः अस्माकम् अज्ञातवासः सुखेन सम्पन्नः'' इति उक्तवान् ।

एवं पाण्डवाः यदा ज्ञाताः अभवन् तदा उत्तरः युद्धे दृष्टम् अर्जुनस्य पराक्रमं वर्णितवान् । सः अर्जुनं प्रदर्शयन् - ''यथा सिंहः हरिणीः अनुधावन् मारयति, तथैव एषः कौरवयोधान् मारितवान् । एषः महावीरः एकैकेन बाणेन एकैकं गजं लीलया मारयति स्म । यदा एषः शङ्खं वादितवान् तदा तु न केवलं शत्रवः, अपि तु अहम् अपि बधिरः जातः इव'' इति उक्तवान् ।

तत् श्रुत्वा विराटः - ''एते सर्वे अतिरथ-महारथाः एव इति तु सत्यं एव । परन्तु दौर्भाग्यं नाम अस्माभिः एषः विषयः न ज्ञातः एव ! इदानीम् अस्माकं प्रथमकार्यं तु एतैः सह बान्धव्यस्य वर्धनम् । तदर्थं मम

पुत्रीम् उत्तराम् अर्जुनाय दत्त्वा विवाहं कर्तुम् इच्छामि'' इति उक्तवान् ।

''ततः पूर्वम् अस्माभिः पूज्याः एते पाण्डवाः सम्माननीयाः । तदेव प्रथमं कर्तव्यम् अस्ति अस्माकम्'' इति पितरम् उक्तवान् उत्तरः ।

विराटः - ''सत्यम् । युद्धे अहं पराजितः सन् यदा सुशर्मणः बन्धने आसं तदा अस्मान् विमोचितवान् भीमः । पाण्डवानां साहाय्येन एव वयं जयं प्राप्तवन्तः स्मः । अतः पाण्डवज्येष्ठः धर्मराजः अस्माकं विषये सन्तुष्टः भवेत् । अस्माभिः अज्ञानेन दोषाः कृताः स्युः । तैः वयं क्षन्तव्याः'' इति उक्तवान् ।

एवम् उक्तवान् विराटः धर्मराजाय समस्तं राज्यं कोशादिकं च भक्त्या समर्प्य पाण्डुनन्दनान् प्रशंसन् पुनः पुनः आलिङ्गितवान् ।

अनन्तरं सः धर्मराजम् उद्दिश्य - ''इदानीं भवन्तः दत्तस्य वचनस्य अनुसारं द्वादशवर्षाणां वनवासम्, एकवर्षस्य कष्टकरम् अज्ञातवासं च समापितवन्तः सन्ति । इतः परं चिन्ता नास्ति । मम राज्यम् अपि अर्जुनस्य एव भवतु । तस्मै मम पुत्रीम् उत्तरां दत्त्वा विवाहं करिष्यामि'' इति उक्तवान् ।

तदा धर्मराजः अर्जुनं दृष्टवान् । अर्जुनः विराटम् उद्दिश्य - ''राजन् ! भवतः पुत्रीम् अहं न परिणेष्यामि । परन्तु स्नुषात्वेन अङ्गीकरोमि । एतेन सम्बन्धेन आवयोः वंशयोः आनुकूल्यं भविष्यति'' इति उक्तवान् ।

तत् श्रुत्वा विराटः अत्याश्चर्यं प्रकटयन् अर्जुनम् उद्दिश्य - ''मम पुत्रीं पत्नीरूपेण अङ्गीकर्तुं कः क्लेशः भवतः ?'' इति पृष्टवान् ।





"राजन् ! अहं तस्याः नृत्यगुरुः आसम् । अतः अहं तस्याः पितृतुल्यः । मम पुत्रः श्रीकृष्णस्य भागिनेयः अभिमन्युः यद्यपि कनीयान्, तथापि शस्त्रप्रयोगे नितरां कुशलः अस्ति । भवतः पुत्र्याः निमित्तम् अनुरूपः वरः अस्ति सः" इति उक्तवान् अर्जुनः ।

तदा विराटः महत्या तृप्त्या - "अस्तु । भवतः इच्छानुसारमेव भवतु । मया सह बान्धव्यवर्धनं भवतां सर्वेषाम् इष्टाय जातम् इति तु महतः सन्तोषस्य विषयः" इति उक्तवान् ।

विवाहः कदा करणीयः इत्येतं विषयं धर्मराजः निश्चितवान् । तस्मिन् एव दिने अर्जुनविराटादयः कृष्णाय एतां वार्तां दूतद्वारा प्रेषितवन्तः ।

एकवर्षस्य अज्ञातवासस्य अनन्तरं पाण्डवाः विराटनगरीं त्यक्त्वा उपप्लव्यनामकं स्थलं गत्वा स्थितवन्तः । पाण्डवानां हितैषिणः सैन्यसहितं तत्र समागतवन्तः । काशीराजः क्लैब्यः अपि अक्षौहिणीसैन्येन सह समागतः । द्रुपदः, द्रौपद्याः पुत्राः उपपाण्डवाः, शिखण्डी, धृष्टद्युम्नः च अक्षौहिणीसैन्येन सह आगताः । विराटः द्रुपदराजं स्वागतीकृत्य सत्कृतवान् । अनेके राजानः उपप्लव्यं समागताः ।

अभिमन्युम्, इन्द्रसेनादीन्, पाण्डव-भृत्यान् च आत्मना सह नयन् श्रीकृष्णः प्रस्थितवान् । तेन सह बलरामः, कृपवर्मा, युयुधानः, सात्यकिः, अक्रूरः, साम्बादयः च आगतवन्तः । ततः सर्वे विराटराज्यं प्रति प्रस्थितवन्तः । यावत् ते विराटनगरीसमीपम् आगताः तावता विराटस्य प्रासादे शङ्खभेरीप्रभृतीनि मङ्गलवाद्यानि वादितानि । विराटः पाण्डवान् यथोचितं सत्कृतवान् । सुदेष्णा, अन्याः अन्तःपुरस्य स्त्रियः च आत्मानं सम्यक् अलङ्कृत्य सर्वेषां स्वागतं कृतवत्यः । वधूः इव सज्जीकृता उत्तरा सर्वैः दृष्टा ।

अभिमन्युः उत्तरायाः परिणयम् अङ्गीकृतवान् । अनन्तरम् अर्जुन-धर्मराजयोः अङ्गीकारं प्राप्य एव विराटः कृष्णस्य साहाय्येन तयोः विवाहं सवैभवं कृतवान् ।

अभिमन्योः विवाहस्य अनन्तरदिने सर्वे पाण्डवाः अतिथिभिः सह विराटस्य सभाभवने सम्मिलिताः । सभामध्ये

विराटः, द्रुपदः, केचन ज्येष्ठराजाः च उपविष्टवन्तः । वसुदेवः, सात्यकिः, बलरामः, श्रीकृष्णः, प्रद्युम्नः, साम्बः, अभिमन्युः, उपपाण्डवाः, पाण्डवाः, विराटस्य पुत्राः चापि सभायाम् उपस्थिताः आसन् ।

तदा कृष्णः सर्वान् उद्दिश्य उक्तवान् - ''भवन्तः सर्वे जानन्ति एव यत् द्यूते एतं धर्मराजं पराजित्य दुर्योधनः एतस्य राज्यम् अधर्मरीत्या स्ववशं कृतवान् इति । स्वबलपराक्रमात् यद्यपि राज्यं पुनः प्राप्तुम् अशक्ष्यन्, तथापि पाण्डवाः स्ववचनानुसारं महाभयङ्करं वनवासं द्वादश वर्षाणि यावत् अनुभूतवन्तः । तस्य अपेक्षया कष्टकरम् अज्ञातवासम् अपि यशस्वितया समापितवन्तः ते । एकवर्षं यावत् ते विराटस्य दासाः सन्तः कालं यापितवन्तः । अग्रिमभविष्यम् अपि भवन्तः एव निर्णयन्तु । सः निर्णयः धर्मराजेन दुर्योधनेन च अङ्गीकृतः भवेत्, कीर्तिसाधकं च भवेत् । न केवलं तावत्, सः निर्णयः धर्मसम्मतः चापि भवेत् । स्वर्गाधिपत्यम् अपि यदि अधर्मरीत्या लभ्येत, तर्हि तत् न अङ्गीकरोति एषः धर्मराजः । धर्मरीत्या यदि लघुग्रामः दीयेत तर्हि तम् एव सन्तोषेण स्वीकुर्यात् । सः सर्वदा अपि धृतराष्ट्रपुत्राणां हितम् एव इच्छति । पाण्डवाः स्वशक्त्या जितानि राज्यानि एव इदानीं पृच्छन्तः सन्ति । उभयपक्षीयाः अपि सहोदरपुत्राः एव इति कारणतः सर्वेषां हितमार्गः एव चिन्तनीयः । इदानीम् अपि यदि दुर्योधनः वञ्चनां कर्तुं प्रयतते तर्हि तान् पाण्डवाः एकस्मिन् क्षणे एव संहरेयुः । दुर्योधनः एव पराक्रमी, पाण्डवाः बलहीनाः इति चिन्तनीयं नास्ति । दुर्योधनस्य अभिप्रायं वयं न जानीमः । तम् अज्ञात्वा निर्णयं





अक्रीडिष्यत् तर्हि निश्चयेन जयं प्राप्तवान् अभविष्यत् । किन्तु धर्मराजः न केवलं द्यूतं कृतवान्, अपि तु आवेशेन सर्वस्वम् अपि पणीकृत्य पराजयं प्राप्तवान् । अत्र शकुनिना कृतः दोषः कोऽपि नास्ति । अतः दुर्योधनः यथा सन्तुष्टः भवेत् तथा व्यवहरेत् इतः यः दूतः गच्छति सः'' इति उक्तवान् ।

बलरामस्य वचनानि श्रुत्वा सात्यकिः अत्यन्तं कुपितः जातः । सः अनुक्षणं बलरामं निन्दन् - ''भवतः चिन्तनानुसारं भवान् उक्तवान् अस्ति । अतः भवते अहं कुपितः नास्मि । परन्तु भवतः अर्थहीनवचनानि मौनेन उपविश्य शृण्वत्यै एतस्यै सभायै अहं कुप्यामि । धर्मराजः द्यूतादिविषयेषु नितरां पाण्डित्यहीनः

स्वीकर्तुं न शक्नुमः । अतः दुर्योधनस्य उद्देशं ज्ञातुम् इतः कश्चित् उत्तमं, समर्थं, जागरूकं दूतं प्रेषयामः चेत् वरं स्यात् । सः दूतः तत्र गत्वा योग्यरीत्या दुर्योधनाय सर्वं निवेद्य, पाण्डवाः यथा अर्धराज्यं प्राप्तुं शक्नुयुः तथा कर्तुं समर्थः भवेत्'' इति ।

अनन्तरं बलरामः कृष्णस्य अभिप्रायं समर्थयन् - ''इतः यः दूतः गच्छति सः तत्र भीष्मं, धृतराष्ट्रं, द्रोणम्, अश्वत्थामानं, कृपं, शकुनिम्, अन्यकौरवप्रमुखान् च दृष्ट्वा यथा ते कुपिताः न भवेयुः तथा उत्तमवचनानि उक्त्वा कार्यं साधयेत् । वस्तुतः शकुनिना सह द्यूते भागः गृहीतः यत् तत् एव धर्मराजेन कृतः महान् दोषः । द्यूते शकुनेः समानः कोऽपि नास्ति । तस्यां सभायां धर्मराजः यदि अन्येन केनचित् सह

अस्ति । तादृशं तम् अनुरोधेन क्रीडयन्तः जयं प्राप्तवन्तः सन्ति ते । किम् एषः धर्मजयः ? यदि ते धर्मराजस्य गृहम् आगत्य द्यूते विजयं प्राप्तवन्तः स्युः तर्हि सः धर्मविजयः अभविष्यत् । भवतु नाम । पाण्डवाः इदानीं स्ववचनानुसारं वनवासम्, अज्ञातवासं च समापितवन्तः सन्ति । इदानीं स्वराज्यं प्राप्तुं धर्मराजेन याचनीयं किमपि नास्ति खलु ? एतेषां राज्यं कथञ्चित् स्वायत्तीकरणीयम् इति दुरुद्देशेन युक्ताः दुर्योधनादयः धर्ममार्गम् अनुसरन्ति इत्यत्र मम विश्वासः सर्वथा नास्ति । वयं सर्वे मिलित्वा तं मारयित्वा धर्मराजस्य पट्टाभिषेकं करवाम । धृतराष्ट्रस्य कृपया राज्यं प्राप्तव्यं नास्ति धर्मराजेन । तथापि धर्मराजस्य अभिप्रायम् अज्ञात्वा अस्माकम्

अग्रे गमनं सर्वथा अशोभनं स्यात्'' इति उक्तवान् ।

अनन्तरं द्रुपदः - ''सात्यकिना उक्तं समीचीनम् अस्ति । उत्तमवचनानां द्वारा दुर्योधनात् राज्यं प्राप्तुं न शक्यते इत्येव भासते ममापि । धृतराष्ट्रः स्वपुत्रान् निग्रहीतुं सर्वथा अशक्तः । भीष्म-द्रोणौ तु ऋणबद्धौ सन्तौ अनन्यगतिकतया दुर्योधनम् अनुसरतः । एतादृश्यां परिस्थितौ दूतस्य उत्तमवचनेन प्रयोजनं किमपि न भवेत् इति अहं चिन्तयामि । उत्तमवचनानि दुर्योधनस्य दृष्ट्या तु अस्माकम् अशक्ततायाः सूचकानि । तथापि अस्माकं प्रयत्नं वयं कुर्मः । स्वसैन्येन सह आगच्छन्तु इति शल्यः, दृष्टकेतुः, जयत्सेनः, कैकेयः च सूचनीयाः । दुर्योधनः अपि एतत् कार्यं करोति । यः प्रथमं साहाय्यं याचति तेन तत् लभ्यते इति कारणतः अनुक्षणं सैन्य-सङ्ग्रहणकार्यम् आरम्भणीयम् अस्माभिः । एतत् बहु दायित्वयुक्तं कार्यम् । बहुभ्यः राजभ्यः एषा वार्ता प्रेषणीया अस्ति'' इति उक्त्वा स्वपुरोहितं दर्शयन् - ''एषः मम पुरोहितः । वयोवृद्धः, धर्मशीलः, गुणवान् च अस्ति एषः । एतं सर्वं विषयम् उक्त्वा धृतराष्ट्रस्य आस्थानं प्रति प्रेषयाम'' इति उक्तवान् ।

कृष्णः अन्ते सर्वान् उद्दिश्य वदन् - ''द्रुपदस्य वचनानुसारं यदि आचरामः तर्हि उत्तमं भविष्यति । तथा कार्यकरणे अपि राजनीतेः उपयोगः करणीयः । उभय-पक्षीयाः अपि यदि सुखं प्राप्नुयुः तर्हि तस्मात् श्रेष्ठं किम् अन्यत् स्यात् ? वयं सर्वे विवाहार्थम् आगताः जनाः । इदानीं वयं सर्वे प्रतिगन्तुम् अर्हामः । द्रुपदराजः वृद्धः अस्माकं गुरुसमानः च अस्ति । धृतराष्ट्रं प्रति प्रेषणीयं सन्देशं यदि सः एव नेष्यति तर्हि भीष्मद्रोणादयः अङ्गीकरिष्यन्ति । सः निर्णयः सर्वसम्मतः च भविष्यति । यदि दुर्योधनः सन्देशविषये उपेक्षां प्रदर्शयति तर्हि सर्वे अस्मद्हितकाङ्क्षिणः राजानः झटिति सूचनीयाः । तथैव अहम् अपि अविलम्बेन सूचनीयः'' इति उक्तवान् ।

एवम् उक्त्वा यदा कृष्णः प्रतिगन्तुम् उद्युक्तः, तदा विराटः तस्मै यथेष्टं धनकनकवस्तुवाहनानि दत्त्वा तं सत्कृत्य सन्तोषेण प्रेषितवान् ।



# रसवार्ताः

## विचित्रं व्यसनम्

विविधदेशानां मूल्याङ्कानां, नाणकानां, विशिष्टानां समपत्राणां, पाञ्चालिकानाम्, अन्येषां तादृशविशिष्टवस्तूनां च सङ्ग्रहस्य व्यसनं बहूनां



भवति एव । किन्तु केरलीययोः नीलाम्बूरप्रदेशस्य सहोदरयोः षमीरषहीरयोः व्यसनं तु बहु विचित्रम् अस्ति । नीलाम्बूरप्रदेशः गजानां वासस्थानं वनम् इति प्रसिद्धः जातः अस्ति । वनस्य समीपे अटन्तौ एतौ बालौ एकस्मिन् दिने पादद्वयपरिमितं दीर्घं पिच्छद्वयं प्राप्तवन्तौ । तौ कुतूहलेन तत् आनीय गृहे रक्षितवन्तौ । तदारभ्य तयोः पिच्छसङ्ग्रहस्य व्यसनम् आरब्धम् । मयूरः, दार्वाघाटः, पिकः, मैना इत्यादीनां द्विशताधिकविधानि पिच्छानि एतौ सहोदरौ सङ्गृहीतवन्तौ स्तः । एतयोः मातापितरौ प्रोत्साहनेन सह पक्षिणां विषये अधिकं ज्ञातुम् अपि साहाय्यं कृतवन्तौ । विभिन्नानां पक्षिणां नामानि सङ्गृह्य तेषाम् आहारपद्धतेः विषये, जीवनक्रमस्य विषये च टिप्पणीः सज्जीकृतवन्तौ स्तः एतौ । पिच्छानां सङ्ग्रहसमये तौ पिच्छानां संख्यायाः वर्धनस्य अपेक्षया विशिष्टानां सङ्ग्रहे अधिकम् अवधानं दत्तवन्तौ स्तः । अतः विरलानां विशिष्टानां पक्षिणां पिच्छानि सङ्ग्रहीतुं विशेषप्रयत्नः प्रचलति तयोः ।

## सुवर्णव्यामोहः

४,९३,००० कोटिरूप्यकमूल्यस्य ९५००टन् परिमितं सुवर्णम् अस्माकं देशे जनानां सङ्ग्रहे अस्ति । एतत् सर्वम् आभरणरूपेण अस्माकं देशस्य धनिकानां गृहेषु सुरक्षितम् अस्ति । विश्वे उपलभ्यस्य सुवर्णस्य ८% भागः अस्माकं देशे एव अस्ति । एकस्याः गणनायाः अनुगुणं प्रतिवर्षं ५००टन् परिमितं सुवर्णम् अस्माकं देशस्य धनिकानां गृहाणि प्रविशत् अस्ति इति ज्ञायते । अत्र अस्माकं देशे केवलं टन्द्वयपरिमितं सुवर्णं लभ्यते । अन्यत्सर्वं विदेशतः आनाय्यते ।

## अस्थिपञ्जरस्य सघोषविक्रयणम्

सामान्यतः ६५,०००,००० वर्षेभ्यः पूर्वं भूमेः उपरि वासं कृतवान् इति यद्विषये भाव्यते तस्य डैनोसर्स्नामकस्य दैत्यप्राणिनः अस्थिपञ्जरम् अमेरिकायाः दक्षिणडकोटाप्रदेशे क्रि.श. १९९० तमे वर्षे हिड्रिक्सन्नामकः अन्विष्टवान् । ५० पादपरिमितदीर्घस्य एतस्य अस्थिपञ्जरस्य नाम 'नूया' इति । एतत् अस्थिपञ्जरं १३० पेटिकासु पूरयित्वा सद्यःकाले एव न्यूयार्क्नगरं प्रति आनीतम् अस्ति । अद्यपर्यन्तम् अन्विष्टानां डैनोसरस्-प्राणिनाम् अस्थिपञ्जराणां ४०%-५०% भागाः नष्टाः । किन्तु एतस्य 'नूया'-अस्थिपञ्जरस्य सर्वाणि अस्थीनि उत्तमस्थितौ सन्ति । सद्यः एव न्यूयार्क्नगरे प्रवृत्ते सघोषविक्रयणे चिकागोनगरस्य वस्तु-सङ्ग्रहालयस्य स्वामी कश्चित् एतत् अस्थिपञ्जरं ८,४००,००० डालर्परिमितं (३० कोटिरूप्यकाणि) धनं दत्त्वा क्रीतवान् अस्ति ।

चन्दमामायाः
अनुबन्धः - ११०



अस्माकं देशस्य
सौन्दर्यस्थानानि

# यात्रिकाणाम् आकर्षणस्थानं कोच्चिन्

हरितैः तरुगुल्मोपेतैः पर्वतैः युक्तं दक्षिण-भारतस्य केरलराज्ये विद्यमानं कोच्चिन्नगरं बहुपुरातनम्, इतिहासप्रसिद्धं च अस्ति ।

ऐतिहासिक-सांस्कृतिक-विविधतायाः निमित्तम् एतत् नगरं प्रसिद्धं जातम् अस्ति । बहुशतकपूर्वकालात् एव अस्मात् प्रदेशात् सुगन्धद्रव्याणि, चायपर्णं, काफीबीजानि इत्यादीनि वस्तूनि विश्वस्य विविधेभ्यः देशेभ्यः प्रेष्यन्ते स्म । १६ शतके कोच्चिन्नगरं प्रथमतः पोर्चुगीस्जनाः आक्रान्तवन्तः । अनन्तरं तत् डच्जनानां वशं गतम् । नौकास्थानस्य समीपे विद्यमाने माटन्चेरिप्रदेशे विद्यमानं 'डच्प्रासादः' वस्तुतः पोर्चुगीस्जनैः एव निर्मितः क्रि.श.१५५७ तमे वर्षे । किन्तु क्रि.श. १६६३ तमे वर्षे डच्जनाः तस्य नवीकरणं कृतवन्तः इति कारणेन तस्य डच्प्रासादः इत्येव नाम आगतम् ।





कामन्वेल्त्देशेषु एव अत्यन्तं पुरातनभूतं यहूदीयप्रार्थनामन्दिरम् (सिनगाग्) अत्रैव अस्ति । एतत् मन्दिरं क्रि.श.१५६८ तमे वर्षे निर्मितम् । किन्तु क्रि.श.प्रथमशतके एव रोमन्जनेभ्यः त्रस्ताः यहूदीजनाः केरलम् आगत्य वासं कृतवन्तः आसन् ।

कोच्चिन्प्रदेशे अधुना अपि चीनादेशस्य मत्स्यजालस्य एव उपयोगः क्रियमाणः अस्ति । कोच्चिन्परितः अनेकानि द्वीपानि सन्ति । तानि द्वीपानि गन्तुं नौकाः अपि सन्ति । विल्लिङ्ग्डन्द्वीपस्य समीपे डाल्फिन्मीनाः जले उत्पतन्तः क्रीडन्तः भवन्ति । वैपिन्द्वीपे आह्लादकरे वातावरणे सञ्चारः बहु आनन्ददायकः भवति । कोच्चिन्नगरे रैल्वेस्थानकं, विमानस्थानकं च अस्ति । तथापि नारिकेलवृक्षैः आवृतायां लघुकुल्यायाम् अलेप्पितः कोचिन्पर्यन्तं नौकया प्रयाणकरणकरणम् एव कञ्चन विशिष्टम् अविस्मरणीयम् अनुभवं ददाति ।

# एकवीरः

पुरा पवित्रायाः गङ्गानद्याः तटे अनेकानि लघुराज्यानि आसन् । तेषु एकं राज्यं 'हैहय'वंशस्य एकवीर-नामकः राजा परिपालयति स्म ।

कदाचित् सः वनविहारार्थं गतवान् आसीत् । तस्मिन् समये एव दक्षिणदिक्तः अत्यपूर्वः सुगन्धयुक्तः वायुः आगतः । सुगन्धः कुतः आगच्छन् अस्ति इति ज्ञातुम् इच्छन् एकवीरः कुतूहलेन तस्यां दिशि गतवान् । अनतिदूरे एकं सरोवरम् आसीत् । तस्य मध्यभागे एकं विकसितं कमलपुष्पम् आसीत् । एकवीरः तत् दृष्टवान् । तस्य सरोवरस्य तीरे रुदतीं काञ्चित् युवतिम् अपि दृष्टवान् सः । "किमर्थं रोदिति भवती ?" इति तस्याः समीपं गत्वा तां रोदनस्य कारणं पृष्टवान् एकवीरः ।

तदा सा युवतिः उक्तवती - "प्रतिवेशिराज्यं रैभ्यः नाम कश्चित् महाराजः पालयति । अहं तस्य पुत्र्याः एकावल्याः सखी अस्मि । रैभ्यमहाराजः एकावल्याः सन्तोषार्थम् एव अनेकानि कमलपुष्पाणां सरोवराणि निर्मितवान् आसीत् । कदाचित् एतस्मिन् सरोवरे स्थितानां दिव्यपुष्पाणां सुगन्धात् आकृष्टा राजकुमारी मया सह अत्र आगतवती । तस्मिन् समये अत्र आगतः कालकेतुः नाम कश्चित् राक्षसः मम सख्याः एकावल्याः सौन्दर्यं दृष्ट्वा तस्याम् अनुरक्तः अभवत् । तां परिणेतुम् इष्टवान् सः । परन्तु मम सखी तं निराकृतवती । एतेन कुपितः राक्षसः तां नीत्वा पातालगुहायां बन्धने स्थापितवान् अस्ति । तदारभ्य अहं दुःखेन रुदती अत्रैव अस्मि" इति ।

सर्वं विषयं श्रुत्वा एकवीरः पातालगुहां गत्वा कालकेतुं मारयित्वा एकावलीम् आनीय रैभ्यमहाराजाय अर्पितवान् । एतस्मात् नितरां सन्तुष्टः महाराजः उक्तवान् - "राजकुमार ! मम पुत्र्याः विवाहः भवता सह करणीयः इति पूर्वमेव अहं चिन्तितवान् आसम् । तदर्थं भवन्तं सूचयितुं मन्त्रिणः प्रेषणम् अपि चिन्तयन् आसम् । किन्तु तावति काले तस्याः अपहरणम् अभवत् । भवान् एव तां रक्षित्वा आनीतवान् अस्ति । अतः कृपया तां भवान् एव परिणयतु इति अहं भवन्तं प्रार्थयामि" इति ।

एकवीरः 'अस्तु' इति उक्त्वा सन्तोषेण एकावलीं परिणीतवान् ।



# भवन्तः जानन्ति किम् ?

## राजवंशस्य चिह्नानि




मध्ययुगस्य राजवंशस्थाः वीराः स्वस्य खेटकानाम् उपरि सुन्दराणि चिह्नानि लेखयन्ति स्म । तानि हेराल्डिक् डिवैसस् इति नाम्ना निर्दिश्यन्ते स्म । तेषां चिह्नानाम् अध्ययनस्य विभागः 'हेरालि' इति नाम्ना निर्दिश्यते । एतानि चिह्नानि केवलम् अलङ्कारार्थमेव न आसन्, अपि तु क्रि.श. ११४० तमवर्षसमये वंशसूचकानि अपि भवन्ति स्म । एतानि चिह्नानि परम्परारूपेण वंशेषु अनुवृत्तानि । केचन एतानि चिह्नानि न केवलं खेटकस्य उपरि अपि तु किरीटे, उष्णीषे, कवचे, अश्वस्य खलीने चापि योजयन्ति स्म । इदानीन्तनकाले यथा तथा तस्मिन् समये योधानां समवस्त्राणि न आसन् । अतः युद्धसमये एतानि चिह्नानि 'शत्रुः कः, मित्रं किम्' इति अभिज्ञातुं सङ्केतरूपेण उपयुज्यन्ते स्म ।

## इन्द्रधनुः

### कार्ल् लूयिस्

क्रीडापटूनाम् एव वंशे जातः कार्ल्लूयिस् कश्चित् अपूर्वः क्रीडापटुः । तस्य पिता व्यायामशिक्षकः अस्ति । माता भगिनी च विश्वस्तरीये क्रीडापटू स्तः । सहोदरः अपि साकर्क्रीडापटुः अस्ति । कार्ल्लूयिस् स्वस्य क्रीडाजीवने बहुवारं जयं प्राप्तवान् अस्ति । क्रि.श.१९८३ तमे वर्षे यु.एस्.छाम्पियन्षिप्मध्ये त्रिसृषु क्रीडासु जयं प्राप्तवान् एषः । क्रि.श.१९८४ तमे वर्षे प्रवृत्ते ओलम्पिक्क्रीडायां १०० मी. & २०० मी. दूरस्य च धावने, लाङ्गजम्प्स्पर्धायां, ४×१०० मी. दूरस्य रिलेधावने च सुवर्णपदकानि जित्वा (आहत्य ४) जेस्सि-ओवन्स्वर्यस्य समानः अभवत् । क्रि.श. १९८८ तमे वर्षे सियोल्मध्ये प्रवृत्तायाम् ओलम्पिक्स्क्रीडायां १०० मी. धावने लाङ्गजम्प्मध्ये च एषः सुवर्णपदकं प्राप्तवान् । एषः लाङ्गजम्प्मध्ये अत्यधिकवारं जयं प्राप्तवान् अस्ति ।




विश्वस्तरे एव दूरधावने अत्यन्तवेगधावकः सन् एषः 'स्प्रिंटर्' इति नाम्ना ख्यातः अस्ति ।

स्वातन्त्र्यस्य सुवर्णमहोत्सवस्य अवसरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*("अस्माभिः किं करणीयं, किं न करणीयम् इति निश्चेतुं कुतश्चित् अन्यदेशात् आगतानां अस्माकं राज्यानि अतिक्रम्य शासनं कुर्वताम् आङ्ग्लजनानाम् अधिकारः नास्ति" इति चिन्तनम् आरब्धम् भारतीयानां मनस्सु । आदौ मीरत्नगरे सैनिकाः आंग्लानां विरोधं कृत्वा जितवन्तः । पश्चात् ते देहलीं गत्वा ततः अपि तान् पलायितवन्तः । तेन जयेन सैनिकाः स्फूर्तिं प्राप्तवन्तः । नानासाहेबस्य नायकत्वे कान्पुरे प्रवृत्ते युद्धे, ते दुर्गं स्वायत्तीकृतवन्तः । तदा ये प्राणसहितम् अवशिष्टाः ते आंग्लाः अलहाबाद्नगरं प्रति सकुशलं प्रेषिताः । तदनन्तरम् ...)*

प्रशान्तः सूर्योदयस्य समयः । झान्सीनगरस्य प्रासादस्य समीपे विशाले क्रीडाङ्गणे कश्चन युवकः अश्वचालनस्य अभ्यासं कुर्वन् आसीत् । तस्मात् ज्येष्ठः अन्यः कश्चन युवकः अश्वं गृहीत्वा धावन् तस्य युवकस्य साहाय्यं कुर्वन् आसीत् । ततः अनतिदूरे स्थिताः संस्थानस्य अधिकारिणः केचन तस्य उत्साहं वर्धयितुं हर्षोद्गारं कुर्वन्तः आसन् । तदा तस्मिन् मार्गे ये सामान्यजनाः गच्छन्तः आसन् ते तत् दृश्यं दृष्ट्वा आनन्दम् आश्चर्यं च अनुभूतवन्तः । अश्वस्य उपरि विद्यमानः युवकः कः स्यात् इति किञ्चित् समीपं गत्वा दृष्ट्वा, पुरुषवेषे स्थिता अस्माकं राज्ञी अश्वचालनस्य अभ्यासं कुर्वती अस्ति इति ज्ञात्वा ते सन्तुष्टाः । झान्सीराज्ञ्याः अश्वचालनस्य अभ्यासं यः कारयति स्म सः शिक्षकः युवकः पूरीप्रदेशात् आगतः

चन्दनपूजारी आसीत् । तं युवकं झान्सीराज्ञी बाल्यात् अपि सहोदरं भावयति स्म ।

झान्सीराज्ञी न केवलम् अश्वचालनस्य, अपि तु अश्वस्य उपरि उपविश्य खड्गयुद्धस्य अभ्यासम् अपि कुर्वती आसीत् । एकेन हस्तेन प्रग्रहं गृहीत्वा अन्येन हस्तेन प्रकाशयुक्तं खड्गं गृहीत्वा अश्वं चालयन्तीं तां द्रष्टुं शताधिकजनाः तत्र सम्मिलितवन्तः । शत्रून् जेतुं स्वयं युद्धविद्यायाः अभ्यासं कुर्वतीं राज्ञीं दृष्ट्वा झान्सीनगरस्य जनाः – "जयतु महाराज्ञी ! अस्माकं राजमातुः शुभं भूयात् !" इति आनन्देन हर्षोद्गारं कृतवन्तः ।

"जयतु झान्सी ! मम उपस्थितौ अनुपस्थितौ चापि अस्माकं प्रजानां कीर्तिः चिरकालं यावत् प्रकाशताम्" इति वदन्ती लक्ष्मीबायी तेषां समीपम् आगतवती ।

"अम्ब ! अस्माकं शत्रवः कीदृशाः शक्तिशालिनः क्रूरिणः च इति वयं जानीमः । अतः भवत्याः रक्षणं कर्तुं अस्माकं राज्यस्य गौरवस्य पुनः-प्रतिष्ठापनार्थं च वयं अस्माकं अन्तिमश्वासपर्यन्तं युद्धं कर्तुं सिद्धाः स्मः" इति उक्तवन्तः तत्र विद्यमानाः जनाः ।

"अस्माकं प्रजानां धैर्यं मया अज्ञातं न । भवताम् अभिमानः अभिनन्दनीयः । भगवान् भवतः रक्षतु" इति वदन्ती लक्ष्मीबायी हस्तम् उन्नीय तेषाम् आप्रच्छनं कृत्वा, अश्वम् आरुह्य प्रासादं गतवती ।

क्रि.श. १८५१ तमे वर्षे जून्मासस्य आरम्भे प्रवृत्ता घटना एषा । तस्मिन् दिने मध्याह्ने ग्रामप्रमुखाणां, मन्त्रिणां,



सेनापतीनां, च समावेशः आसीत् । लक्ष्मीबायी तान् उद्दिश्य अवदत् – "कान्पुरे युद्धं प्रचलत् अस्ति । मम बाल्यकाले युद्धविद्याः यः मां पाठितवान् सः मातुलसमानः नानसाहेबः श्वेतवर्णीयानां विरुद्धं युद्धं कुर्वन् अस्ति । संस्थायाः सैनिकाः दुर्गस्य अन्तर्भागात् एव युद्धं कुर्वन्तः सन्ति । ते यदाकदापि अपजयं प्राप्नुयुः इति तु सत्यम् एव । तैः स्वकीयान् प्राणान् रक्षितुम् अन्यत्र कुत्रापि पलायनं करणीयं भवति । एषः एव समयः अस्माकं स्वातन्त्र्यस्य प्रकटनार्थम् इति अहं भावयामि । एतद्विषये भवताम् अभिप्रायः कः इति अहं ज्ञातुम् इच्छामि" इति ।

"महराज्ञि ! भवत्याः चिन्तनं युक्तमेव अस्ति । 'वयं स्वतन्त्राः' इति उद्घोषयितुम्



अयं योग्यः समयः अस्ति । अत्र विद्यमानाः ब्रिटिष्सैनिकाः अहङ्कारयुक्ताः सन्तः मद्यपानं कुर्वन्तः, द्यूतेन समयं यापयन्तः सन्ति । यदि वयम् अधुना तेषाम् उपरि आक्रमणं कुर्याम तर्हि निश्चयेन ते दिग्भ्रान्ताः भविष्यन्ति'' इति उक्तवान् कश्चित् प्रमुखः ।

तस्य अभिप्रायं श्रुत्वा मन्दहासेन सह अङ्गीकारपूर्वकं शिरः चालयन्ती लक्ष्मीबायी प्रधानमन्त्रिणं लक्ष्मणरावं पश्यन्ती - ''ब्रिटिष्राजकीयप्रतिनिधेः एल्लिस्वर्यस्य, दलपतेः मेजर्-मारोस्वर्यस्य च पुरतः एव मम पतिः दत्तकपुत्रग्रहणं कृतवान् इति विषयं भवन्तः सर्वे जानन्ति एव । यावत् सः राजकुमारः प्राप्तवयस्कः न भविष्यति तावत् शासनस्य अधिकारः मह्यं दत्तः अस्ति इत्यपि ते जानन्ति । किन्तु अधुना दुराशापीडितः गवर्नर् जनरल् डाल्हौसिः वचनभ्रष्टः जातः अस्ति । दत्तकपुत्रस्वीकारः शासनविरुद्धः इति सः उद्घुष्टवान् अस्ति । अस्माकं महाराजः एतां संस्थाम्, एतं डाल्हौसिम् एव वा यदि दत्तकरूपेण स्वीकृतवान् स्यात् तर्हि प्रायः ते सन्तुष्टाः अभविष्यन् । तेषाम् एतादृशं कार्यं विश्वासघातकम् अस्ति । अधुना अस्माकं स्वातन्त्र्यस्य रक्षणम् अस्माकं कर्तव्यम् । तस्य अर्थः - 'इदानीमेव अस्माभिः ब्रिटिष्जनाः दण्डनीयाः' इति न । शान्ततया एव झान्सीं परित्यज्य गमनाय तेभ्यः एकम् अवकाशं दद्मः वयम्'' इति उक्तवती ।

''महाराज्ञि ! इतः त्रिभ्यः वर्षेभ्यः पूर्वं अत्र यः आंग्लाधिकारी आसीत् तेन तदा लिखितस्य पत्रस्य प्रतिकृतिः एका अत्र अस्ति । अस्मिन् पत्रे - 'राज्ञ्याः विषये अत्रत्यानां जनानाम् अत्यन्तं गौरवं प्रेम च अस्ति । सा अपि स्वस्य पुत्रस्य प्रतिनिधित्वेन दक्षतया शासनं कुर्वती सर्वेषां जनानां प्रीतिम् आदरं च सम्पादितवती अस्ति' इति । इतः पूर्वम् एवम् उक्तवन्तः एव अधुना विपरीतरूपेण व्यवहरन्तः सन्ति यत् तस्य कारणं दुराशा एव । राज्यस्य शासनं कर्तुं राज्ञी न अर्हा इति तैः यत् कथ्यते तत् विचित्रमेव अस्ति'' इति उक्तवान् प्रधानमन्त्री आवेशेन ।

''तैः एतत् सर्वं ज्ञात्वा कृतं स्यात्, अथवा अज्ञात्वा अपि कृतं स्यात् । परं फलं तु तैः अनुभोक्तव्यमेव । एतं विषयं तान् ज्ञापयितुं श्वः एव अस्माकं राजदूतं कञ्चित्

तेषां समीपं प्रेषयाम । पश्चात् अस्माभिः अग्रे किं करणीयम् इति विषये वयं चर्चां करिष्यामः'' इति उक्तवती राज्ञी ।

''यथाज्ञापयति महाराज्ञी'' इति वदन् उत्थितवान् प्रधानमन्त्री । ततः सा सभा समाप्तिं गता ।

अनन्तरदिने प्रधानमन्त्री एकं पत्रं लिखित्वा तत् राजदूतद्वारा ब्रिटिष्-प्रतिनिधिभ्यः प्रेषितवान् । तस्य पत्रस्य सारः एषः आसीत् - 'झान्सीराज्यम् अधुना स्वतन्त्रम् अस्ति । यदि एतत् स्वायत्तीकर्तुं वयं शक्नुमः इति भ्रान्तिः भवतां स्यात् तर्हि ततः बहिरागन्तुम् अयं कश्चन उत्तमः अवकाशः अस्ति । भवन्तः अत्र अस्माकं मित्रवत् अतिथिवत् वा न सन्ति । भवन्तः अस्माकं जनान् पीडयन्तः सन्ति । सम्पूर्णतया अस्माकं शासने एव विद्यमानात् झान्सीराज्यात् भवद्भिः निर्गन्तव्यम् इति वयं सूचयन्तः स्मः । यदि अस्माकं शासनस्य उल्लङ्घनं कृत्वा भवद्भिः अत्रैव स्थीयेत तर्हि सम्भाव्यमानस्य नाशस्य फलभाजः भवन्तः एव भवन्ति । भवतां सैनिकाः निष्करुणया अस्माकं प्रजाः पीडितवन्तः यत् तत् वयं न विस्मृतवन्तः । तत् भवद्भिः अपि विस्मृत्य न गन्तव्यम् । भवन्तः न केवलं अस्माकं जनान् लुण्ठितवन्तः, अपि तु तेषां हिंसाम् अपि कृतवन्तः सन्ति । अनेकेषां प्राणान् अपि अपहृतवन्तः सन्ति भवन्तः । यदा अस्माभिः युद्धस्य घोषणा क्रियते तदा भवद्भिः पीडिताः, प्रतीकारं प्रतीक्षमाणाः अस्माकं सैनिकाः अनुक्षणमेव बुभुक्षितव्याघ्रवत् आक्रमणं करिष्यन्ति ।



युद्धस्य आरम्भानन्तरं तान् निरोद्धुं वयमपि न शक्ष्यामः । अतः तेषां कोपभाजः मा भवन्तु । शीघ्रमेव झान्सीं परित्यज्य भवतां गमनं श्रेयस्करम्' इति ।

एतादृशस्य सन्देशस्य दर्शनेन झान्सीनगरे विद्यमानाः आंग्लाधिकारिणः आश्चर्यचकिताः अभवन् । युद्धविद्यायां अशिक्षिताः झान्सीसैनिकाः अस्माकं युद्ध-विद्यानिपुणान् सैनिकान् जेतुं न प्रभवन्ति इति विचिन्त्य ते औदासीन्यं प्रकटितवन्तः सन्ति । अपि च यदा ब्रिटिष्शासनं झान्सीराज्ये आरब्धम् आसीत् तदारभ्य एव तत्र सैन्यस्य सङ्ग्रहः निषिद्धः आसीत् ।

प्रधानमन्त्रिणः पूर्वसूचनां न परिगणितवन्तः इति कारणेन झान्सीराज्ञ्याः आदेशानुसारं निवृत्तानां सैनिकानां

दलपतीनां च नायकत्वे झान्सीसैनिकाः ब्रिटिष्जनानां दुर्गम् आक्रान्तवन्तः । कालाखान्-महमद्हुसेन्-नामकयोः निवृत्ताधिकारिणोः नायकत्वे झान्सी-सैनिकाः परिणतसैनिकाः इव युगपत् दुर्गम् आक्रान्तवन्तः । आगतान् तान् दृष्ट्वा ब्रिटिष्सैनिकाः दिग्भ्रान्ताः अभवन् ।

''परमक्रूरिणः नीलस्य नायकत्वे अस्मान् लुण्ठितवन्तः, अस्माकं गृहाणि च दग्धवन्तः नीचाः एते एव'' इति वदन्तः केचन सैनिकाः अग्रे गतवन्तः ।

''अस्माकं भ्रातॄन् मारितवन्तः दुष्टाः एते एव'' इति वदन्तः ब्रिटिष्सैनिकानाम् उपरि खड्गप्रहारं कृतवन्तः अन्ये केचन ।

ईष्ट्-इण्डिया-संस्थायाः दुर्गस्य उपरि झान्सीराज्यस्य ध्वजस्य उड्डायनसमये पञ्चसप्तत्यधिकाः आंग्लाः मारिताः ।

झान्सीनगरे प्रवृत्तस्य युद्धस्य विषयः जून्मासस्य अष्टमे दिनाङ्के सागरं प्रति प्राप्तः । तेन ललितपुरे बान्पूर्राजः युद्धार्थं महत्सैन्यं सङ्गृहीतवान् । षाघडस्य राजा अपि ब्रिटिष्जनैः सह युद्धाय सिद्धः अभवत् । केषुचित् एव दिनेषु नर्मदानद्याः उत्तरभागे विद्यमानानि सर्वाणि राज्यानि युद्धाय सिद्धानि अभवन् । बान्पूरस्य राजा ललितपुरम् आक्रम्य तत्रत्यान् श्वेतवर्णीयान् बन्दीकृतवान् । ललितपुरं मोचयितुं मेजर्गासेनस्य नायकत्वे सागरतः प्रस्थितं सैन्यं मार्गे एव अवरुद्धम् इति कारणेन माल्डावाप्रदेशम् अपि अतिक्रम्य आगन्तुम् अशक्तम् अभवत् । बान्पूर्राजस्य सैनिकानां गासेनस्य सैनिकानां मध्ये जातस्य सन्धेः कारणेन अन्ते २२ तमे दिनाङ्के गासेनस्य सैनिकाः बहिरङ्गतया तस्य विरोधं कृतवन्तः । तस्मिन् एव समये बान्पूरराजः यान् ब्रिटिष्-अधिकारिणः, महिलाः च बन्दीकृतवान् आसीत् तेषां सागरं प्रति गमनाय अनुमतिं दत्तवान् । किन्तु यदा ते गच्छन्तः आसन् तदा मध्येमार्गं तान् षाघडस्य राजा आक्रम्य बद्धवान् । तान् मासत्रयं यावत् बन्धने स्थापयित्वा अनन्तरं गमनाय अनुमतिं दत्तवान् । यद्यपि ब्रिटिष्जनानां विरोधः सर्वत्र दृष्टः, तथापि कुत्रपि विनाकारणं, विचारणेन विना ब्रिटिष्जनानां हननं न अभवत् अति अभिमानास्पदविषयः अस्ति ।





# विवाहप्रस्तावः

सहस्राधिकवर्षेभ्यः पूर्वं काश्मीरदेशे कस्यचित् नगरस्य समीपे पर्वतप्रदेशे कश्चित् राक्षसः वसति स्म । सः यदाकदाचित् नगरम् आगत्य - "भवतः पुत्र्या सह मम विवाहं करोतु" इति कश्चित् उद्दिश्य वदति स्म । 'न दास्यामि' इति वक्तुम् अशक्ताः सन्तः ये स्वपुत्रीं तस्मै यच्छन्ति स्म ते केषुचित् एव दिनेषु पुत्र्याः मरणवार्तां शृण्वन्ति स्म । राक्षसः पुनः अन्यविवाहम् अभिलषन् आगच्छति स्म । अतः नगरजनाः, तत्रापि कन्यापितरः, सदा राक्षसपीडां स्मरन्तः भयेन एव दिनानि यापयन्ति स्म ।

एवमेव चतुर्विंशतिपत्नीवियोगानन्तरं राक्षसः पञ्चविंशतितमवारं परिणयम् इच्छन् नगरं प्रति आगच्छन् आसीत् । तदा कश्चित् दरिद्रः कृषिकः तेन दृष्टः । राक्षसः तस्य समीपं गत्वा - "भवतः पुत्रीं मह्यं ददातु" इति उक्तवान् । कृषिकः एतस्य वचनं श्रुत्वा दिग्भ्रान्तः । तस्य मल्लिकानामिका एका पुत्री आसीत् । यद्यपि सा विवाहवयस्का आसीत्, तथापि दारिद्र्यकारणतः इतोऽपि सः तस्याः विवाहं न कृतवान् आसीत् ।

"अहं परश्वः रात्रौ भवतः गृहं प्रति भोजनार्थम् आगमिष्यामि । तदा विवाह-विषये वार्तालापं करिष्यामः" इति उक्त्वा राक्षसः स्वगृहं गतवान् ।

कृषिकः गृहम् आगत्य राक्षसेन उक्तं सर्वं स्वपुत्रीं मल्लिकाम् उक्तवान् । तत् श्रुत्वा मल्लिका किञ्चित् अपि विचलिता न जाता । पितरम् उद्दिश्य शान्तस्वरेण सा उक्तवती - "तात ! अलं भीत्या । मया यथा उच्यते तथा करोतु भवान् । तेन राक्षसः अस्माकं सम्बन्धमेव निराकुर्यात् । अन्यथा अस्माकं दारिद्र्यं तु निर्गच्छेत् एव" इति ।

मल्लिकायाः वचनानुसारं तस्याः पिता

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



स्वसमीपे विद्यमानं समग्रं धनं व्ययीकृत्य पाकार्थम् अनेकान् शशान्, प्रभूतां सुरां च आनीतवान् । मल्लिका प्रतिवेशिगृहाणि गत्वा शताधिकानि नूतनवस्त्राणि ऋणरूपेण आनीय भित्तेः पृष्ठतः विद्यमानायां कपाटिकायां स्थापितवती । भोजनदिने शशमांसेन भाण्डपरिमितान् विविधान् रुचिकरान् पाकान् कृतवती । राक्षसस्य भोजनार्थं यत् स्थलं निश्चितम् आसीत् तत् स्थलम् उभयतः अपि एकत्र पाकस्य भाण्डः, अन्यत्र सुरापात्रं च स्थापितम् ।

आगतः राक्षसः भोजनार्थम् उपविष्टवान् । पाकः अत्यन्तं रुचिकरः आसीत् । ''मम निमित्तं भवता बहु व्ययः कृतः इति मन्ये । मया सर्वदा अधिकम् एव खाद्यते'' इति कृषिकम् उक्तवान् राक्षसः ।

''अत्र क्लेशः कोऽपि नास्ति । यावत् मूषकाः भवन्ति तावत् व्ययः कथं वा भवेत् ? मूषकाः यदि न्यूनाः तर्हि पाके पिष्टं किञ्चित् अधिकतया योजनीयं, तावदेव'' इति उक्तवती मल्लिका ।

''भवती मूषकैः एतावद्रुचिकरं पाकं कृतवती किम् ? इतः पूर्वं कापि पत्नी मूषकैः पाकं कृत्वा मां न भोजितवती एव'' इति आश्चर्येण उक्तवान् राक्षसः ।

भाविपत्न्याः सञ्चयबुद्धिं मनसि एव प्रशंसन् महान्तं सन्तोषम् अनुभवन् राक्षसः - ''भवती सीवनम् अपि जानाति इति चिन्तयामि'' इति उक्तवान् ।

मल्लिका कपाटिकायां विद्यमानानि वस्त्राणि हस्तेन दर्शयन्ती - ''एतानि सर्वाणि गतमासे मया एव सीवितानि'' इति उक्तवती । एतेन राक्षसस्य मनसि मल्लिकायाः विषये विद्यमानः अभिप्रायः इतोऽपि उत्तमः जातः ।

सः भोजनं समाप्य सुरां पिबन् - ''बहु उत्तममस्ति । एतस्य निमित्तं वा बहुव्ययः जातः स्यात् एव खलु'' इति उक्तवान् ।

''व्ययः कथम् ? नष्टानि फलानि एव सुरानिर्माणार्थम् उपयुक्तानि । तादृशकार्ये सुनिपुणा अस्ति मम पुत्री मल्लिका'' इति उक्तवान् कृषिकः ।

''नष्टैः फलैः एतावतीं रुचिकरीं सुरां कर्तुं शक्यते इति तु अहं न जानामि स्म । वयं तानि सूकरेभ्यः दद्मः स्म । मल्लिकायाः आगमनानन्तरं तां पद्धतिं परिवर्तयिष्यामि । परन्तु मल्लिकया सह भवान् कियतीं वर-दक्षिणां दास्यति ?'' इति पृष्टवान् राक्षसः ।

"मल्लिका एव महावरदक्षिणायते । सा यदि इतः गमिष्यति तर्हि मम महती हानिः भविष्यति । अतः यः तां परिणेतुम् इच्छति सः एव मह्यं प्रभूतं धनं दद्यात् । एतस्य ग्रामस्य प्रमुखस्य पत्नी गतवर्षे मृता । ग्रामप्रमुखः अन्यां परिणेतुम् इच्छति । 'यदि मल्लिका मह्यं दीयेत तर्हि यावत् धनं पृच्छ्यते तावत् दीयते' इति उक्तवान् अस्ति सः" इति उक्तवान् कृषिकः ।

कुपितः राक्षसः समीपम् आगत्य - "माम् उद्दिश्य भवान् एतत् वदन् अस्ति किम् ? यदि अहं भवतः पुत्रीं बलात्कारेण परिणयेयं तर्हि भवान् किं वा कर्तुं शक्नुयात् ?" इति पृष्टवान् ।

"एवं तर्हि भवान् मल्लिकायाः विषये किमपि न जानाति इति तु सिद्धम् । महती अनुक्तग्राहिता तस्याः । यत् सा न इच्छति तत् तस्याः द्वारा कारयितुं कोऽपि न शक्नोति लोके । सा प्राणान् वा परित्यजेत्, किन्तु अप्रियं कार्यं तु न कुर्यात् । अतः उत्तमवचनैः एव तया कार्यं कारणीयम्" इति उक्तवान् कृषिकः ।

"अस्तु, अस्तु" इति वदन् राक्षसः - "पञ्चसहस्रं सुवर्णनाणकानि दीयन्ते" इति उक्तवान् ।

"तावत् तु सर्वथा अपर्याप्तम् । एतस्मात् त्रिगुणितं यदि दीयेत तर्हि अङ्गीकर्तुं शक्येत" इति उक्तवान् कृषिकः ।

तदा राक्षसः एवं चिन्तितवान् - 'मल्लिकायै यावत् धनं दीयते तावत् तु आहारसुरादिरूपेण प्रत्यागमिष्यति एव' इति । 'इदानीं प्रभूतं धनं दीयते चेद् अपि हानिः तु न भविष्यति' इति निर्णीय सः 'दशसहस्रं सुवर्णनाणकानि दीयन्ते' इति उक्तवान् । यद्यपि कृषिकः आदौ असम्मतिं प्रदर्शितवान्, तथापि अन्ते तावतः स्वीकारम् अङ्गीकृतवान् । वस्तुतः तु तावता धनेन सः आजीवनं सुखेन जीवनं कर्तुम् अशक्ष्यत् एव ।



"अस्तु । श्वः तावत् धनं दत्त्वा मल्लिकया सह सम्भाषणं करोतु । सा इदानीं निद्रिता अस्ति" इति उक्तवान् कृषिकः ।

अनन्तरदिने प्रातःकाले राक्षसः धनस्यूतम् आनीय कृषिकाय दत्तवान् । मल्लिका तेन सह सम्भाषणं कुर्वती - "मां यः परिणेतुम् इच्छति सः मम अपेक्षाद्वयं पूरयेत् । कौटुम्बिकजीवनं सुखमयं कर्तुं मम




इच्छानुसारं नूतनगृहं निर्माय दद्यात्, वृद्धा यदा कादम्बस्य पिच्छं निष्कासयति तदा तैः पिच्छैः निर्मितां शय्यां मह्यं सज्जीकृत्य दद्यात् च । तस्यां यदि निद्रां करोमि तर्हि एव आदिनं कार्याणि कर्तुम् अहं शक्नोमि'' इति उक्तवती ।

'एषा पुनः धनादिकं तु न पृष्टवती यत् तत् तु सौभाग्यम् । कर्मकराणां द्वारा गृह-निर्माणं कार्यते चेत् वेतनं दातव्यं भविष्यति' इति चिन्तयता राक्षसेन स्वपरिश्रमेण एव गृहं निर्मितम् ।

तावता शैत्यकालः आरब्धः । मल्लिका शय्यानिमित्तं वस्त्राणि स्यूताकारेण सज्जीकृत्य हिमपातं निरीक्षमाणा स्थितवती । यदा हिमपातः आरभ्यते स्म तदा तत्प्रदेशजनाः ''वृद्धा कादम्बस्य पिच्छं निष्कासयन्ती अस्ति'' इति वदन्ति स्म ।

अनतिकाले एव हिमपातः आरब्धः । ''कादम्बस्य पिच्छानि पतन्ति सन्ति । तानि न सङ्गृह्णाति किम् ?'' इति राक्षसाय वार्तां प्रेषितवती मल्लिका ।

सः अपि आगत्य हिमपातं दृष्ट्वा - ''एतत् कथं सङ्ग्रहणीयम् ?'' इति पृष्टवान् ।

''मूर्ख ! कुद्दालेन पिच्छानि स्वीकृत्य शय्यास्यूते स्थापयतु'' इति उक्तवती मल्लिका ।

राक्षसः कुद्दालेन हिमं स्वीकृत्य स्यूते निरन्तरं पूरयन् आसीत् । यथा यथा हिमं पूर्यते स्म तथा तथा कश्चन भागः द्रवत्वं प्राप्नोति स्म । अतः स्यूतस्य पूरणं कष्टकरम् एव आसीत् । महता कष्टेन सायङ्कालात् पूर्वं स्यूतं हिमखण्डैः पूरयित्वा तस्य मुखं सीवयित्वा मल्लिकायाः पुरतः स्थापितवान् राक्षसः । मल्लिका हिमशय्यायाः उपरि वस्त्रं प्रसार्य - ''अद्य रात्रौ एतस्य उपरि शयनं करोतु भवान् । ततः महत् सुखं प्राप्यते । श्वः आवयोः विवाहः भवतु'' इति उक्तवती ।

श्रान्तः राक्षसः तस्याः हिमशय्यायाः उपरि एव सुप्तवान् । महता प्रयत्नेन अपि तदीयं शरीरम् उष्णतां न प्राप्नोत् । शय्यायाः उपरि प्रसारितं वस्त्रम् अपि आर्द्रतां गतम् आसीत् ।

प्रातः उत्थानसमये राक्षसः समग्रे शरीरे महतीं पीडां प्राप्तवान् आसीत् । सः चलितुम् अपि न शक्नोति स्म । शय्यायाः अर्धभागः द्रवत्वं प्राप्तवान् आसीत् ।

''अलम् एतस्याः सहवासेन । यद्यपि मल्लिका समर्था अस्ति, तथापि एतां परिणीय एतादृश्याः शय्यायाः उपरि यदि शयनं कुर्यां तर्हि मम मरणं निश्चितम्' इति चिन्तयन् राक्षसः मौनेन गृहं प्रति गतवान् । 'मल्लिका आगत्य मां परिणयतु इति वदति चेत् मया किं वा करणीयम्' इति चिन्तां प्राप्तवान् आसीत् सः ।

राक्षसस्य गमनानन्तरं मल्लिका स्वपितरं राक्षसस्य गृहं प्रति प्रेषितवती । कृषिकः राक्षसस्य गृहं गत्वा राक्षससेवकम् उद्दिश्य - ''राक्षसः कुत्र ? सः यां परिणेतुम् इष्टवान् आसीत् सा मल्लिका मुहूर्तनिश्चयार्थं मां प्रेषितवती अस्ति'' इति उक्तवान् ।

सेवकद्वारा वार्तां ज्ञातवान् राक्षसः - ''मम आरोग्यं सम्यक् नास्ति । ताम् अहं परिणेतुं न इच्छामि अपि'' इति वार्तां सेवकद्वारा प्रेषितवान् ।

कृषिकसेवकयोर्मध्ये वार्तालापः जातः । सेवकः प्रत्यागत्य - ''कन्यायाः आशाभङ्गः कृतः यत् तदर्थं किं दीयते इति पृच्छन् अस्ति कृषिकः'' इति राक्षसम् उक्तवान् ।

''धनं पूर्वमेव मया दत्तम् अस्ति । पिच्छशय्या अपि दत्ता अस्ति । अन्यत् किम् अपेक्ष्यते तेन ?'' इति पृष्टवान् राक्षसः ।

पुनः अपि कृषिकेण सह वार्तालापं कृत्वा अन्तः गत्वा - ''भवान् शयनं कृत्वा पिच्छशय्याम् असमीचीनां कृतवान् अस्ति इति कारणतः पुनः पिच्छैः सा शय्या पूरणीया इति वदति कृषिकः'' इति उक्तवान् सेवकः ।

''अस्माकं गोष्ठे विद्यमानान् सर्वान् अपि कादम्बान् नयतु नाम सः । पुनः अपि एतस्य सम्पर्कः एव मास्तु मम । इतोऽपि अधिकं किमपि वदति चेत् भवान् तं वदतु यत् 'खण्डीकृत्य खादिष्यामि' इति'' इति सेवकम् उक्तवान् राक्षसः ।

एतत् वचनं श्रुत्वा अनुक्षणं कृषिकः ततः प्रस्थाय राक्षसस्य कादम्बान् चारयन् गृहम् आगतवान् ।

राक्षसः हिमशय्यायाः पीडातः विमुक्तः न जातः एव । अनन्तरं कस्याश्चित् अपि तरुण्याः परिणये मतिं न कृतवान् सः ।

मल्लिका तु राक्षसतः धनं प्राप्य धनिका जाता आसीत् । अतः अनुरूपं वरं परिणीय सा सुखेन जीवनं यापितवती ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां एप्रिल् - १९९८ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - मयूरी इव मनोहरी इयं बालिका ।

द्वितीयचित्रम् - न केवलं सा, तथैवास्ति इयमपि पुत्थलिका ।

प्रेषकः - पि सत्यनारायणमूर्तिः, H.No.13-14-4(3) विद्यासालिमार्गः, भीमवरम् - ५३४ २०१ (आ.प्र.)




Printed by B.V. REDDI at Prasad Process Pvivate Ltd., Chandamama Building, Chennai- 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K.Salai, Vadapalani, Chennai- 600 026 (India) Editor : NAGI REDDI.